KÂVYAMÂLÂ. 57.

# THE RÂGHAVA-NAISHADHÎYA

OF

## HARADATTASÛRI

with his own Gloss.

EDITED

BY

PAṆḌIT S'IVADATTA

Head Paṇḍit and Superintendent, Sanskṛit Department, Oriental College, Lahore,

AND

KÂS'INÂTH PÂṆḌURANG PARAB.

REVISED BY

WÂSUDEV LAXMAṆ SHÂSTRÎ PAṆS'ÎKAR.

Second Revised Edition.

PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS,

BOMBAY.

1926.

*Price 10 Annas.*

काव्यमाला. ५७.

श्रीहरदत्तसूरिविरचितं

# राघवनैषधीयम् ।

स्वोपज्ञव्याख्यासमलंकृतम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशिनाथ-
शर्मणा च संशोधितम्, तच्च पणशीकरोपाह्व-
लक्ष्मणशर्मात्मजवासुदेवशर्मणा
संस्कृतम् ।

द्वितीयावृत्तिः ।

तच्च
मुम्बय्यां
पाण्डुरङ्ग जावजी
इत्येतैः स्वीये निर्णयसागराख्ययन्त्रालये मुद्रयित्वा प्राकाश्यं नीतम् ।

१९२६.

मूल्यं १० आणकाः ।

# काव्यमाला।

श्रीहरदत्तसूरिविरचितं[1]

राघवनैषधीयम्[2]।

स्वोपज्ञव्याख्यासमलंकृतम्।

प्रथमः सर्गः।

अभिवन्द्य परात्मानं गुं गिरं च गुरूनपि।
विवर्वरीमि श्रीरामनैषधीयं निजं हरः॥

विशिष्टशिष्टाचारपरम्पराप्राप्तश्रुतिमूलकशिष्यशिक्षादक्षमाङ्गलिकोद्दामसमुच्चयबीजकश्यपावतारभगवत्पितृचरणोच्चारणरूपमङ्गलाचरणं पौरस्त्यपुण्यश्लोकस्तवनद्वढिमग्रन्थकारः पर्यगुम्फीत्—

दशरथ इति नाम्ना वीरसेनः क्षितीशः
क्षितितलविबुधानां वन्दथुः प्राग्बभूव।
गुरुकविबुधजोषः सामृतो नारदाढ्यः
सति नरपतिरत्ने मर्त्यलोकोऽप्यनाकीत्॥ १॥

ननु मङ्गलस्य कियद्धात्वं भवतीत्यपेक्षायामाह—आशीर्नमस्क्रिया वस्तुनिर्देश इति त्रिधा। अत्र वस्तुनिर्देशात्मकं मङ्गलं वितायते। अत्र पद्ये मालिनीवृत्तम्। मनौ मित्रे इति नगणस्य। मित्रत्वम्। नातः परमसौख्यकृदतो न द्व्यप्रक्षेपः। 'दो धः सौख्यम्' इति श्रीनारायणभट्टारिकायां दकारस्य पूर्वन्यासः। पैङ्गलादाहृत्य व्याचष्टे सः। अवर्णात्संपत्तिर्भवतीति अकारव्यामिश्रदकारपाठः। किमेतावता

१. अयं हि हरदत्तसूरिर्गर्गगोत्रोत्पन्नजयशंकरात्मज आसीदिति चरमपद्यतोऽवगम्यते. देशकालौ तु न ज्ञायेते. तथापि वैयाकरणसिद्धान्तकौमुदीप्रणेतृश्रीभट्टोजिदीक्षितस्य नाम्नो 'दीक्षिताः' इति पदेन लेखस्योपलम्भात्ततोऽर्वाचीन इति तु गम्यते. २. अस्य च काव्यस्य पुस्तकमेकमेव श्रीकश्मीरनरेशपुस्तकालयतः पञ्चनददेशीयविश्वविद्यालयाध्यक्षविद्वद्वरश्रीयुतस्टैन (Dr. M.A. Stein) महाशयानामुद्योगेन प्राप्तम्. पुस्तकलिखनकालस्तु—'आकाशाम्नायाद्रिचन्द्रे (१७४०) शके कृष्णत्रयोदशीन्युते भौमर्क्षनक्षत्रे ह्यलिखत्प्रेमवल्लभः।' इति स्फुटमेव लिखितः.

प्रयासेनेति चेत् । 'अक्षरे परिशुद्धे तु नायको भूतिमृच्छति' इति ग्रन्थकृत्परमफलप्राप्तिः, आनुषङ्गित्वेन श्रोतॄणां पाठकर्तॄणां च फलातिशायनं बोभवतीति । प्राक् दशरथ इति क्षितीशो बभूव । कथंभूतः । वीरसेनः वीरा सेना यस्य सः । 'शूरो वीरश्च विक्रान्तः' इत्यमरः । त्रिलिङ्गोऽयम् । 'गोस्त्रियोः–' इति ह्रस्वः । 'स्त्रियाः पुंवत्' इति पूर्वस्य ह्रस्व(पुंव)त्त्वम् । 'शूर वीर विक्रान्तौ' चौरादिकौ धातू । पचाद्यच् । 'पृतनानीकिनी सेना' इति शब्दार्णवः । रणानिवर्तिनी सेनेति ध्वनितम् । तथा स्मृतिश्च—'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥' बभूवेत्यत्र 'वा पदान्ते' इति गुरुत्वम् । पुनः कथंभूतः । क्षितितलविबुधानां वन्दथुः । क्षितितले विबुधा इव ब्राह्मणाः । 'आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाडवाः' इति कोशः । रूपकालंकारः । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः । तेषां विप्राणां वन्दथोर्नमस्कारकर्ता स्तोता च । 'वदि अभिवादनस्तुत्योः' इति अर्थद्वयनिर्देशात् । 'शीङ्शपिरुगमिवन्दिजीविप्राणिभ्योऽथुः' वन्दतेरनेन सूत्रेणाथुप्रत्ययः । यदा कर्तरि तदा स्तोता नमस्कर्ता च ज्ञेयः यदा कर्मणि तदा स्तुत्यो नन्तव्यश्चेति भावः । कर्मणि षष्ठी । क्षि निवासगत्योः । क्षियन्ति भूतान्यस्यामिति संज्ञायां क्तिन् । वयोरूपादीनां न हि सर्वेषां नम्रत्वं जायते इति विशेषोक्तिरलंकारः । साकूतसर्वविशेषणत्वात्परिकरश्च । विबुध इति । 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् । पुनः कथंभूतः । गुरुकविबुधजोषः । 'कृग्रोरुच्च' इति कुप्रत्ययः । गृणाति हितं शिष्यायेति गुरुः । गुरुश्च कविश्च विबुधश्चेति द्वन्द्वः । जोषणं जोषः । तेषां जोषणं यस्य स इति बहुव्रीहिः । 'जुषी प्रीतिसेवनयोः' । 'हलश्च' इति घञ् । कर्तरि कप्रत्ययप्रसङ्गात् । गुरुर्वशिष्टः, कविर्वाल्मीकिः, बुधः पण्डितजनः । जात्याख्यामेकत्वम् । तेषां नित्यसेवकः । पुनः कथंभूतः । सामृतः । अमृतेन सह वर्तत इति सामृतः । 'वोपसर्जनस्य' इति सहस्य सः । 'अमृतं विघसो यज्ञशेषभोजनशेषयोः' इत्यमरः । 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते' इति मेदिनिः । यज्ञशेषभुगिति तात्पर्यार्थः । पुनः कथंभूतः । नारदाढ्यः । नराणां समूहो नारम् । 'तस्य समूहः' इत्यण् । तस्मै ददतीति नारदा दानशौण्डास्तैः सभायामाढ्यो युक्त इत्यर्थः । यत्सर्वास्थानसभायां महोदारा एव प्रिया आसन् । न तु कृपणाः । नामग्रहणस्यापि तेषां धर्मशास्त्रे निषिद्धत्वात् । 'आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठपुत्रकलत्रयोः ॥' इति स्मृतिः । तस्मिन् नरपतिरत्ने सति मर्त्यलोकोऽप्ययमनाकीत् । 'रत्नं स्वजातिश्रेष्ठेऽपि बले सलिलकानने' इति तार्तीयकवचनम् । नाक इवाचारीत् । 'सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्यः' इति क्विप् । 'सनाद्यन्ताः–' इति धातुत्वम् । लुङ् । न हि मर्त्यलोकस्य स्वर्गसाम्यं जातु भवति वैधर्म्यात् । तत्रत्यानां साधर्म्ये सत्युपमा घटते । व्यतिरेकश्च कुतः स्यादित्याशङ्कायामाह—श्लिष्टविशेषणमाहात्म्यात्स्वर्गस्य साम्यं भवत्येव स्वर्गे गुरुर्बृहस्पतिः । कविः शुक्राचार्यः । बुधो ग्रहश्चान्द्रिः । अमृतपानं तेषाम् । नारदो देवर्षिरपि

तत्र विजृम्भते। एवमत्रापि सर्वं ध्रियते । एवं सति स्वर्गसामग्रीसाकल्यव्यवच्छेदाभावाद्दशरथे सति शब्दश्लेषोपमालंकारो विलसतीति विदांकुर्वन्तु सहृदयाः । 'वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि । कर्मकर्त्रोर्णमुल्येतद्विलोपे क्विप् समासगा ॥' इति काव्यप्रकाशे निरूपितम् ॥ इदानीमत्रैव पद्ये चमत्कारधारामपारां वर्षतीं नलकथामपि कविरवातीतरत् । एवं सर्वत्राग्रे वोत्तरिष्यति क्रमेण। **नलपक्षे** इति योजनिका—प्राक् वीरसेन इति क्षितीशो बभूव । प्राक् कृतयुगे । नाम्नेति 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । म्नायतेऽभ्यस्यते इति नाम । 'नामन्सीमन्–' इत्यादिना सूत्रेण निपात्यते । वीरसेननामा नलस्य पिताभूत् । क्षितेरीशो राजा । कथंभूतो वीरसेनः । दशरथः दशसु दिक्षु रथोऽव्याहतो यस्य स इति बहुव्रीहिः । यद्वा 'दशि दर्शनाङ्कनयोः' इत्याकुस्मीयो धातुः । दसेत्येके । शसयोरभेदादलंकारशास्त्रे । दशः शत्रुदंशको रथो यस्य स इति बहुव्रीहिः । दसेः पचाद्यच् । 'अनित्यण्यन्ताश्चुरादयः' इत्युक्तत्वात् । यद्वा 'वेनातिक्रामति' रथेनातिक्रामति रथयति दशानां दंशकानां कुटिलानां रथेनातिक्रामक इत्यर्थः । दशानां ज्ञानकर्मेन्द्रियाणां रथः प्रवर्तक इव मनसः सारथित्वात्प्राधान्यम् । साक्षान्मनोरूप इवेति रूपकम् । यद्वा दानं दः । घञर्थे कविधानम् । दानं रक्षणं वितरणं वाश्यन्ति कृशयन्ति इति दशा दैत्यराक्षसाः । तद्वधको रथो यस्येति धर्मगुप् इति फलितोऽर्थः । देङ् रक्षणे । डुदाञ् दाने । द्वौ धातू वर्तेते यतः । तथा गुरुः सुमतिः, जातूकर्ण्योऽभूदस्य कविः,बुधः शास्त्रव्याख्याता पण्डितस्तेषां जोषः सेवनं यस्य स इति । नलपक्षेऽप्यन्यत्समानमिति ॥

रामोऽभिरामः सनलः प्रतीतः पुत्रोऽभवत्तस्य सुसत्यसंधः ।
सलक्ष्मणः सद्भरतः सशत्रुहा चतुर्विधत्वं गतवानिवैकः[1] ॥ २ ॥

तस्य रामः पुत्रोऽभूत् । कथंभूतः । सलक्ष्मणः सद्भरतः सशत्रुहा । ह आश्चर्यम् । वेति निश्चये । 'वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये' इति विश्वः । एकः । 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतिः । रामहृदये 'रामं विद्धि परं ब्रह्म' इति वचनात्परमात्मत्वम् । व्यासवाक्यानां शिरोधार्यत्वात् । चतुर्विधत्वं गतवान् । ब्रह्म मायाशबलं जगदुपादानकारणम् इति वेदान्तिराद्धान्तः । 'न घटत उद्भवः प्रकृतिपुरुषयोरुभययुजा भवन्त्यसुभृतः' इत्यादि वेदस्तुतिवचनं च । एवं सति आत्मानं व्यूह्यैकं चतुर्धास्यादिति भावः । वास्तवमेकत्वं गतोऽपि भगवानवतारं कल्पयन् भूभारहरणार्थं तावद्वा ददृशे । कथंभूतो रामः । अभिरामः सुन्दरः । 'नैगमौ द्वौ, बले रामो नीलचारुसिते त्रिषु' इत्यमरः । अभिः परितोभावे वर्तते । पुनः कथंभूतः । सनलः । 'षणु दाने' तानादिकः । षः सः । सन्वन्ति विप्रेभ्यो ददति हिरण्यं ये ते सनाः । पचाद्यच् । आकृतिगणत्वात् । तान् लाति स्वीकरोतीति संभावनायाम् । सनलः । आतोऽनुपसर्गे कः । यद्वा । सनिरध्येषणासत्कारपूर्वको गुर्वादिव्यापारः । सनिं कुर्वन्ति सनयन्ति ते सनाः टिलोपः । तान्

१. रामपक्षे 'गतवान्ह वैकः' इति मूलपाठः प्रतीयते.

लाति गृह्णाति इति तादृशः । उदारप्रिय इति भावः । पुनः कथंभूतः । प्रतीतः । 'ख्याते हृष्टे प्रतीतोऽभिजातस्तु कुलजे जने' इति कोशः । ख्यातो दिक्षु लोकत्रये । पुनः कथंभूतः । सुसत्यसंधः । अतिशयेन सत्यसंधः सत्यप्रतिज्ञः । 'संधा प्रतिज्ञा मर्यादा श्रद्धा संप्रत्ययः स्पृहा' इति तार्तीयिके । 'सत्यतीव च निर्भरे' इति च । 'रामो द्विर्नाभिभाषते' इत्यध्यात्मरामायणे । अन्यसत्यवद्य(क्त)वैलक्षण्यं ध्वन्यते सुशब्देनेति बोध्यम् । पुनः कथंभूतः । सलक्ष्मणः लक्ष्मणसंज्ञभ्रातृसहितः । पुनः कथंभूतः । सद्भरतः प्रशस्तभरतभ्रातृक इत्यभिप्रायः । सन्भरतो यस्य स इति बहुव्रीहिः । पुनः कथंभूतः । सशत्रुहा शत्रुघ्नभ्रातृसहितः । 'वोपसर्जनस्य' सहस्य सः । गुरुरेव प्रीणन् एवं गुणवतां तेषां निरूप्य तादृशि नामानि चकारेत्यर्थः । दशरथस्य लोकपाला इव चत्वारः पुत्रा अभूवन्नित्यर्थः फलितः । रमु क्रीडायाम् । 'अकर्तरि च कारके संज्ञायाम्' इत्यधिकरणे घञ् । पद्मपुराणे—'रमन्ते योगिनो ह्यस्मिन्नित्यानन्दे चिदात्मनि । इति रामपदेनासौ परं ब्रह्माभिधीयते ॥' इति । काश्यां तारकोपदेशमन्त्रोऽप्ययमेव बोध्यः । भगवानपि यत्पुत्रत्वमङ्गीचक्रे तस्य दशरथस्यापि गुणवत्तां वर्णयितुं पारयेदित्यपि ध्वन्यते । 'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याध्वनिर्बुधैः कथितः' इति भरतर्षिसूत्रं साक्षादेवंरूपमुत्तमं काव्यम् । रसानुगुणा एव वर्णा गुम्फिताः ॥ नलपक्षे इत्थम्—तस्य वीरसेनस्य नलः पुत्रोऽभवत् । त्यदादीनां बुद्धिस्थपदार्थपरामर्शकत्वात् । 'तस्येदम्' इत्यादि ज्ञापकात् तच्छब्दः प्रसिद्ध्यर्थकः । त्रैलोक्ये प्रसिद्धः । 'प्रक्रान्तप्रसिद्धानुभूतार्थस्तच्छब्दो यच्छब्दोपादानं नापेक्षते' इत्युक्तं काव्यप्रकाशे । कथंभूतः । रामः । 'रः पावके च तीक्ष्णे च राः स्मृतः स्वर्णवित्तयोः' इति विश्वः । रं पावकममति सेवत इति रामः । सदाहिताग्निरिति तात्पर्यार्थः । 'अम गत्यादिषु' । 'गतेः परयोः शब्दसंभक्त्योरादिशब्देन ग्रहः' इति दीक्षिताः । अमतेः पचाद्यच् । पुनः कथंभूतः । अभिरामः सुन्दरोऽत्यर्थं प्रतीतो हसन्मुखः । 'ख्याते हृष्टे' इति कोशे तथा दर्शनात् । 'प्रतिपूर्वादिणः कर्तरि क्तः' । 'संपूर्वाद्धात्र आतश्चोपसर्गे' इति कर्मण्यङ् । 'लक्ष्मीवांल्लक्ष्मणः श्रीलः' इत्यमरः । अमात्यादिभिर्लक्ष्मीवद्भिर्युक्तः इत्यर्थः । पुनः कथंभूतः । सद्भरतः बिभर्तीति भरः । 'डुभृञ् धारणपोषणयोः' तस्य भावस्त्वतलौ । प्रकृतिजन्यबोधप्रकारस्त्वाद्यर्थः । सतां साधूनां पोषकता यस्य स इति बहुव्रीहिः । उपसर्जनह्रस्वत्वम् । 'आपोऽन्यतरस्याम्' इति विकल्पस्तु कप्येव । असाधुपोषकत्वं धर्मशास्त्रे प्रत्याख्यातम् । तथा च योगीश्वरः—'भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान् । दत्वा चोरस्य वा हन्तुर्जानतो दम उत्तमः ॥' इति । अत एव 'अदान्तान् दमयेत्' इति गौतमस्मृतिः । शिष्टपालनं च दुष्टनिग्रहमन्तरेण न संभवतीति विज्ञानेश्वरः । सर्वत्र सभङ्गाभङ्गशब्दश्लेषोपमालंकारः केषुचित्पदेषु प्रकृतिप्रत्ययश्लेषः । शास्त्रान्तरसंवादित्वेन निर्दूषणत्वं सर्वम् । साकूतविशेषणत्वेन परिकरश्च । संसृष्टिरर्थालंकारी या रसध्वनिश्चात्र बोध्यः । एकोऽपि नलो लक्ष्मणादिभेदत्रयमवगाह्य चतुर्विधत्वं प्राप्तवानिवेत्युत्प्रेक्षालंकारः । 'संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इति

भरतसूत्रम् । इवशब्दोऽत्र व्यञ्जकः । उपजातिच्छन्दः । त्रिष्टुब् जगतीसांकर्यात् । 'पुंनामनरकात्त्राणात्पुत्र इत्युच्यते' इति पुत्रशब्दव्युत्पत्तिः । 'पुनातीति वा पुत्रः' इति भाष्यकाराः श्रीशब्दशास्त्रस्येति दिक् । 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' इति सूत्रं यदा भगवान् व्याचष्ट 'बिभर्तीति भ्राता, पातीति पिता, मान्यत इति माता, पुनातीति पुत्रः' इति ॥

सद्वृत्तसर्वंकषयुद्धशौण्डहिंसीरदर्पोद्धरणाय धात्रा ।
धात्रीप्रतोषाय समभ्युदायि क्षोणीतले सद्दयनः स एकः ॥ ३ ॥

धात्रा क्षोणीतले स एकः समभ्युदायि । 'डुधाञ् धारणपोषणयोः' । दधाति प्रजाः पुष्णातीति धाता तेन पृथिव्यां स प्रसिद्धः । श्रुत्यादिषु एकः । 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतेः । अद्वितीयश्चिदात्मा भगवान् रामः । समभ्युदायि । प्रकटीकृत इत्यर्थः । सम्यक् समीचीनविचारेण समभिपूर्वाद्दयतेः कर्मणि चिण् । उदयमानं प्रेरितवान् सत्प्रैरि । कर्मणि लुङि । 'गत्यर्थाः प्राय उत्पूर्वा उदयार्थाभिधायकाः' इतिभट्टमल्लकोशे उक्तम् । अत एव 'उदयति विततोर्ध्वरश्मिरज्जौ' इति माघः । किंभूतः सः । सद्दयनः । 'दय दानगतिरक्षणहिंसादानेषु' । भावे ल्युट् । सतां दयनं रक्षा यस्य सः । परमकारुणिक इत्यर्थः । कस्मै प्रयोजनाय । सद्वृत्तेत्यादि । सत्प्रशस्तं वृत्तं चरितं येषां ते सद्वृत्ताः साधवस्तेषां सर्वंकषा बाधकाः सूचकत्वात् । 'सर्वकूलाभ्रकरीषेषु कषः' इति खशि मुम् । 'सर्वंकषः खलः' इति दीक्षिताः । सूचनं हि प्राणवियोगानुकूलव्यापारानुकूलत्वाद्धिंसैव । ताडनादिवधान्ता हिंसैव । तथाविधाश्च युद्धशौण्डहिंसीराश्च संग्रामप्रवीणाः । सतां हिंसका ये रावणादयस्तेषां दर्पोद्धरणाय अहंमदध्वंसाय । हृञ् हरणे । उत्पूर्वोऽयं हरतिरुत्पाटने वर्तते । तादर्थ्ये चतुर्थी । पुनः प्रयोजनान्तरं विशिनष्टि—धात्री पृथ्वी निःस्वाध्यायवषट्कारत्वात्पातकपीडिता भारायमाणा दैत्यैस्तस्याः प्रतोषाय अत्यन्ततोषाय प्रादुर्भावं प्राप्तः । 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥' इति गीतासु । तादर्थ्येऽत्रापि चतुर्थी । 'वृत्तं पद्ये चरित्रे च' । 'शौण्डो दक्षः प्रवीणः स्यात्' इति हैमः । 'हिंसीरो व्याघ्ररसो(दुष्टयो)ः' इति रभसः । 'हिंसेरीरन्' । 'एके मुख्यान्यकेवलाः' इत्यमरः । ण्यन्तात्तुषेरेरच् । उपसर्गद्योतकत्वम् । अनन्यसाधारणत्वं रामस्यैतावता व्यज्यते । 'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः । भावः प्रोक्तः' इति नारायणविषयिणी रतिरत्र व्यङ्ग्या सर्वत्रावसेया ॥ **नलपक्षे**—एवासद्दयनः स एको मुख्य इति विशेषः । असत्सु तमःस्वभावेषु दयनं हिंसा यस्य स इति बहुव्रीहिः । 'दय दानगतिरक्षणहिंसादानेषु' । शेषं समानमत्रापि प्रतिपत्तव्यम् । गृहे तिष्ठतामपि तमःस्वभावं विविच्य युद्धशौण्डत्वे सति तिरस्कारकत्वमभूदिति भावः । एवं च पौनरुक्त्यं कुत्रापि न शङ्कनीयम् । उपेन्द्रवज्रेन्द्रवज्रयोरेवात्रोपजातिकत्वम् । उपजातिच्छन्दोऽत्र ॥

निर्वृत्तचूडादिक एष रूप्यः पुरोधसा शास्त्रनिरुक्तवर्त्मना ।
शिखण्डकी पर्यरमद्वयस्यैरस्वद्वयस्यं चरितं न्यशाम्यत् ॥ ४ ॥

एष वयस्यैः सह पर्यरमत् । एष रामः उत नलः वयसा तुल्या वयस्याः । 'नौवयो–' इत्यादिना तुल्यार्थे यत् । 'वयस्यः स्निग्धसवयाः' इत्यमरः । तैः स्निग्धैः सह । सहयोगं विनापीह सहार्थे तृतीया प्रतिपत्तव्या । 'वृद्धो यूना' इति निर्देशात् । पर्यरमत् । 'व्याङ्परिभ्यो रमः' इति रमेः परस्मैपदं बोध्यम् । इतस्ततो व्यलासीत् । किंभूत एषः । रूप्यः प्रशस्ताकारवान् । 'रूपादाहतप्रशंसयोः' इति यप् । 'रूप्यः प्रशस्तरूपे स्यात्' इति धरणिः । पुनः कथंभूतः । पुरोधसा वशिष्ठेन, सुमतिना वा शास्त्रे निरूपितं यद्वर्त्म मार्गस्तेनैव निर्वृत्तं चूडादिकं कर्म यस्येति बहुव्रीहिः । 'शेषाद्विभाषा' इति कप् । 'चूडा कार्या यथा कुलम्' इति योगीश्वरः । विद्यारम्भादय आदिशब्दोपादेयाः । पुनः कीदृशः । शिखण्डकी । काकपक्षः शिखण्डकः । 'अत इनिठनौ' इति मत्वर्थीय इनिः । पुनरेषः । अस्वत् स्वीयं इवाचरत् अस्वदित्यर्थः । य एव ददर्श स एवाहंमतोऽस्मीति हार्दात् अपि च एष द्वयस्यं चरितं न्यशाम्यत् । द्वयं द्वैतमार्गं स्यन्ति नाशयन्तीति द्वयस्याः साधवः तेषु योग्यं द्वयस्यं वेदान्तविषयावच्छिन्नचरितं न्यशाम्यत् शुश्राव । 'निशाम्यतीति श्रवणे घ्रातौ जिघ्रति शिङ्घति' इति भट्टमल्लकोशः । निपूर्वकस्य शमेः श्रवणार्थकत्वम् । योगवाशिष्ठरामायणे वेदान्तचर्चाश्रवणं गुरुणा वर्णितं रामं प्रति । तत्रापि सुमतिः कृतयुगे नलं प्रति वर्णयांचक्रे पुण्यश्लोकस्तेनाभूदिति ज्ञेयम् । यद्वा स्वः प्रमाणमेषां स्वद्वयसाः । प्रमाणे द्वयसच् । न स्वद्वयसाः अस्वद्वयसाः । तत्र साधुः अस्वद्वयस्यम् । कौमारपौगण्डयोरपि अवस्थयोः स्थविरचरितमेव श्रोतुकाम आसीदिति विशेषोक्तिरलंकारः । अभङ्गोपमासंसृष्टिः । अद्भुतो रसः । वयोरूपविभूतीनां मदकारणता भवत्यन्येषाम् । अनयोस्तु प्रह्वत्वं जातमिति भावः । जगतीभेदेन सहोपजातिरियम् । पुरोधा अपि अन्वर्थ एवासीत् । कति पुरोधसो दुर्वृत्ता अपि भवन्ति माघमाहात्म्यादिप्रसिद्धाः । इदं ध्वनयितुं शास्त्रनिरुक्तेति विशेषणम् ॥

सगाधिसूनूक्तिसमर्हणोऽगाद्द्राग्दर्शनं क्षोणिसुपर्वणां तत् ।
सिद्धास्पदं देवनदीभुवं च सरित्सरः प्रस्रवणानि वुन्दन् ॥ ५ ॥

स द्राक् क्षोणिसुपर्वणां तद्दर्शनमगात् । **दाशरथेः पक्षे**—स रामो द्राक् शीघ्रं क्षोणिसुपर्वणां भूदेवानाम् । विप्राणामिति यावत् दर्शनं नयनविषयमगात् प्राप्तवान् । विश्वामित्रेण पथि । नीयमानस्तांस्तानृषीन् पश्यन् तत्प्रसिद्धमित्यर्थः । यद्दर्शनं दुर्लभतरं तद्दर्शनम् । कथंभूतः सः । गाधिसूनूक्तिसमर्हणः । यज्ञविघातशान्तये दशरथं याचितवान् । यदा तर्हि स्वयमेव दशरथसंतापं दूरीकृत्य विश्वामित्रमर्हयांचक्रे । गमिष्यामीति ब्रुवन् सम्यक्, न तु शङ्कमान एव । इति रामायणकथानुसंधेया । गाधिर्नाम राजा तत्पुत्रो विश्वामित्रस्तद्वचनं तदुक्तिस्तदर्हणा यस्य स इति बहुव्रीहिः । किं कुर्वन् । सिद्धास्पदं

सरित्सरः प्रस्रवणादिमध्ये मार्गं वुन्दन् । 'उवुन्दिर् निशामने' धातुः । निशामनं दर्शनम् । च देवनदीभुवमगात् । राजर्षेर्भगीरथस्य चरितं भागीरथ्या नयनं सकारणं सम्यगजानात् । य एव गत्यर्थास्त एव प्राप्त्यर्था ज्ञानार्थाश्चेति शाब्दिकराद्धान्तः । भवनं भूः । संपदादित्वाद्भावे क्विप् । वुन्दिः स्वरित् ॥ **नलपक्षे** तु—गाधीत्यादि । 'गाधृ प्रतिष्ठा लिङ्गयोर्ग्रन्थे च' । औणादिको णिनिः । इनिर्वा 'भुवश्च' इति चकारात् । गाधिनश्च गाधिनश्च गाधिनश्चेति कृतद्वन्द्वानामेकशेषः । प्रतिष्ठावन्तश्च लिप्समानाश्च श्लोकैः स्तुवन्तश्च तेषां (ये सूनवस्तदुक्तीनाम्) मनसापि हीनत्वमविचारयन् किं तु सम्यगर्हणां कुर्वन् परितो निषधदेशं चरन् । तत्तन्मुनीनां पुष्करादिवासिनां दर्शनमगात् दर्शनार्हत्वात् सिद्धानामाश्रमं कपिलादीनां सरितः सरांसि प्रस्रवणानि वुन्दन् पश्यन् देवनदीभुवं च मुनिभ्य एव अमरतरङ्गिणीं चाजानात् । विशेषणानां तुल्यत्वमवसेयमन्येषाम् । उपेन्द्रवज्रेन्द्रवज्रयोरेवोपजातित्वं स्मरणीयमत्र पद्ये विशारदैः ॥

गीर्वाणसिन्धोरुदयं च कौशिकान्निशम्य विस्मेरमुखो बभूव ।
न ताटकां स्वच्युतिमाजघान नो स्वतो द्विजातिप्रणयाय केवलम् ॥६॥

स इत्यनुवर्तते । स च स्मेरमुखो बभूव । किं कृत्वा । कौशिकाद्विश्वामित्रात् गीर्वाणसिन्धोः उदयं निशम्य । गिर एव बाणा येषां ते गीर्वाणा देवाः शापानुग्रहसमर्थत्वात् तेषां सिन्धुर्नदी गङ्गा । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' । तस्या उत्पत्तिं निशम्य श्रुत्वा मत्पूर्वजा इत्थंभूता जाताः, यैरित्थं सामर्थ्यमद्भुतं दर्शितमिति । विस्मेरमुखः ईषद्धसनशीलः । 'स्मिङ् ईषद्धसने' । उपसर्गास्तत्तदर्थान्विशिंषन्ति' इति भाष्यम् । विपूर्वोऽयमाश्चर्ये । 'विश्वामित्रेऽपि कोशाच्चोलूकयोरपि कौशिकः' इति विश्वः । निपूर्वः शमः श्रवणे । स रामः स्वच्युतिं ताटकां नो आजघान । इति नेति काकुः । अपि तु आजघानैवेत्यर्थः । तत्र हेतुमाह—केवलं स्वतः स्वकार्यमुद्दिश्य नो आजघान अपि तु द्विजातिप्रणयाय स्वीयानां मुनीनां च्युतिर्नाशो यस्याः सा तादृशम् । च्युङ् गतौ । गतिरत्र भ्रंशः । 'स्कन्नं पन्नं च्युतं गलितम्' इति कोशप्रामाण्यात् । 'स्वज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरतार्तीयीके । ताडकां राक्षसीमाजघानैव, केवलं निश्चितं द्विजातीनां प्रणयः प्रेम तस्मा एव । नन्विह शङ्क्यते । 'अवध्या ब्राह्मणा गावः स्त्री तपस्वी च रोगभाक्' इति स्मृतिः धर्मस्थापनायावतरन् स्त्रीवधकातरो रामः कुतो नाभूदिति । तद्विशङ्कनं परिह्रियते । उत्सर्गापवादन्यायेनैव सर्वत्र शास्त्रस्थितिः उत्सर्गवाक्यमिदम् । अपवादस्तु—'विप्रं दुष्टां स्त्रियं भ्रूणपुरुषघ्नीमगर्भिणीम् । सेतुभेदकरीं चाप्सु शिलां बध्वा प्रवेशयेत् ॥' इति । योगीश्वरवाक्यं कथं संगतं स्यात् तस्माद्विप्रादिहन्त्री तु हन्तव्येति निर्णयः शास्त्रे । अत एव द्विजातिप्रणयायेति ध्वनकं पदं प्रक्षिप्तम् । अन्यथा कुतर्करचना न कार्या कुतार्किकैः । विश्वामित्रमुखाद्विप्रवधकारिणीं श्रुत्वा घृणामहासीदिति भावः । ताटकापक्षे क्षिपकादित्वादित्वं न बोद्धव्यम् । रूढिपक्षे रूढिर्योगमपहरतीति परिभाषया नेति डित्थादिवत् ॥ **नलपक्षे** तु—

पूर्वार्धे कौशिकात्समस्तकोशज्ञात्सुमतेः सकाशात् कोशपदं चोपलक्षणम्। न हि व्याकरणं विना कोशान् ज्ञातुं शक्यन्ते। न हि महाभाष्यं विना वैयाकरणो व्याख्यायते। न ही भाष्यपारीणः शास्त्रान्तरानभिज्ञो भवतीति समस्तविद्यार्णवावगाहित्वं सुमतेर्व्यज्यते। कारणमालालंकारो व्यज्यते। अपि च स नलः अस्खलः अस्खाननात्मीयान् रिपुं स्खसति नाशयति इत्यस्खतः। 'तसु उपक्षये' दैवादिकः क्विप्। 'अधातोः–' इति निषेधान्न दीर्घः। विरोधे नञ्समासः। 'अप्राशस्त्यं विरोधश्च' इति भाष्यात्। न ताटकां स्वच्युतिं नो जघान। कस्मै प्रयोजनाय। केवलं द्विजातिप्रणयाय। नताः प्रणताः साधवः। 'प्रणतदेहिनां पापकर्शनमि' ति भागवते द्रष्टव्यम्। तानटन्ति यान्तीति नताटा वैष्णवानुसारिणः। 'अट पट गतौ'। पचाद्यच्। नताटानां कमानन्दो यस्याः सा। 'सुख शीर्षजलेषु कम्' इति विश्वः। सेदृशी—स्वच्युतिः निरन्तरं स्वर्णवर्षणं तां च्युतिं नो दूरीचकारेत्यर्थः। आहन्तेर्वारणार्थकत्वमत्र ध्येयम्। कोशाध्यक्षवैमनस्यप्रतिपादितस्वर्णवर्षरोधानुकूलव्यापारवत्ता कदाचिन्नासीदिति भावः। च्युतिर् आसेचने। 'सर्वधातुभ्यः क्तिन्'। वर्षणमित्यर्थः। द्विजातीत्यादिपदे तादर्थ्ये चतुर्थी। अदेशकालश्रद्धादिव्याहततामसादिसंप्रदानकदानं कदाचित्तस्य नैवासीदिति व्यञ्जयितुं केवलद्विजातिपदद्वयसंदर्भणमवसीयतां पण्डितैः। 'निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः' इति तार्तीयीके। शेषं समानम्। जगत्या सहोपजातित्वम्॥

सुबाहुमारीचवृतं पदं ययौ सत्रं रिरक्षीः समजीघटच्च।
द्युतिं खगैः स व्यपनेतुमिच्छन्नुद्यानमेवाश्रयदाङ्गनार्तिः॥ ७॥

आङ्गनार्तिः सुबाहुमारीचपदं ययौ। आङ्गनमङ्गनासमूहः। 'तस्य समूहः' इत्यण्। तस्य स्त्रीसमूहस्य यन्मूर्तिं दृष्ट्वा कामबाधा प्रतिग्राममासीत्। आङ्गनस्यार्तिर्यस्मात्। पञ्चम्यर्थे बहुव्रीहिर्द्रष्टव्यः। ईदृशो भगवान् स सुबाहुश्च मारीचश्च ताभ्यां व्रतं पदं स्थानं 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति परिभाषया रक्षसां राजानौ द्वौ गृहीतौ। उपलक्षणमन्येषामतः राक्षसवृतं पदं स्थानं ययौ जगाम। किं चिकीर्षुः सः। सत्रं विश्वामित्रयज्ञं रिरक्षी रक्षितुमिच्छुः। सन्नतात्क्विप्। 'र्वोरुपधायाः—' इत्यनेन दीर्घः। 'सत्रमाच्छादने यज्ञे सदादाने धनेऽपि च' इत्यमरः। च मारीचादीनां खगैः द्युतिं समजीघटत् सम्यक् चक्रे। चेष्टा व्यापारः क्रियेति भाष्यात् करोत्यर्थवाचकत्वात्। किं चिकीर्षन्। आश्रमाद्व्यपनेतुमिच्छन् यज्ञार्थम्। 'णीञ् प्रापणे' व्यपपूर्वो दूरीकरणार्थः। महर्षिव्यथां नुनुत्सन्नेवेति भावः। 'स्यादुद्यानं निःसरणे वनभेदे प्रयोजने' इत्यमरः सामान्यकाण्डे। तेषां मुनीनां यज्ञविघ्नविघातप्रयोजनमेवाश्रयत् सेवितवान्। 'परित्राणाय साधूनाम्' इत्यादि गीतासु प्रतिपादितत्वात्॥ अथ **नलपक्षे** व्याख्यानम्—सुबाहुमारीचखगैर्वृतं पदं ययौ। तर्हि कश्चन सुबाहुर्नाम बली राजा आसीत्। तमेव करदयांचकार मर्दयित्वा बहुधा। अथ वा शोभना बाहवो दोर्दण्डा येषां ते क्षत्रियकुञ्जरास्तेषामपि घातकत्वाद्दिग्विजये सुबाहुमारी। 'सुप्यजातौ णिनिस्ताच्छील्ये'। सुबाहुमारी खगैर्हंसै-

श्वेतं पदं तडागस्थानं ययौ । किंभूतं पदम् । उद्यानमेव । नन्ववधारणं किमर्थम् । अनङ्गदाहव्यथाशान्तये तादृशपदयानस्यौचित्यात् । कथंभूतः सः । आङ्गनार्तिः आङ्गनी दमयन्तीजा आर्तिः पीडा यस्य स इति बहुव्रीहिः । 'तस्येदम्' इत्यण् । 'टिड्ढा–' इति ङीप् । 'स्त्रियाः पुंवत्' इति [ह्रस्वः] पुंवद्भावकृतत्वम् । पुनः कीदृशः । सत्रं रिरक्षीः सदा दानं रक्षितुमिच्छुः । कदाचिदपि प्रार्थितविघातकत्वं तस्य नाभूत् । च द्रुतिं व्यपनेतुमिच्छन् आश्रयदेव । 'टुदु उपतापे' । स्वादिः । द्रुतिं कामजसंतापं तत्र गमनेन दूरीचिकीर्षन्नपि अनिवार्यत्वात्तामाश्रयदेव सेवितवानेव । चकारो द्वितीयोऽप्यस्ति । च खगैर्हंसैः समजीघटत् । आत्मानमिति शेषः । चङ्परे णौ रूपम् । संगमितवानित्यर्थः । द्रौहिणरत्नस्वर्णमयगात्रविचित्रहंसदर्शनात्तां प्रति सांमुख्यमकरोत् । अर्थालंकारेष्वपि परिकरालंकारः । शब्दालंकारस्तु सर्वेष्वेव वर्तते । संस्कृतभाषारूपोऽर्थान्तरश्लेषसंघटितो दुर्घटः कव्यन्तरैः स्वप्नेऽपि व्यधायि प्रबन्धोऽयम् ॥

मारीचमादुद्रुवदुग्रतेजा एकं परे नेशुरथो सलक्ष्मणः ।
जग्राह हांसीं पदवीं बुधार्दितां नीचीनदेहो दयितार्तिजोषः ॥ ८ ॥

**श्रीरामपक्षे**—पूर्वश्लोकात्स इत्यनुवर्तते । स लक्ष्मणः मारीचमादुद्रुवत् द्रावयामास । बाणेनेति शेषः । 'द्रु गतौ' । चङ्परे णौ रूपम् । अतिदूरं द्रावयांचक्रे । कथंभूतः । उग्रतेजाः उग्रं तेजो यस्य सः एकमन्यं सुबाहुमदुद्रुवत्, न विलापितवान् न मारितवान्, अपि तु अमीमरदेव । 'विलीने द्रुतविद्रुतौ' । इत्थमर्थान्तरदर्शनादत्रैव द्वावर्थौ । 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते ॥' परे अन्ये क्षणान्नेशुः । 'नाशः पलायने मृत्यावपध्वस्तावदर्शने' इति हैमः । सलक्ष्मण इति पदेन अन्ये सर्वे लक्ष्मणेनैव हताः शूरंमन्या इति ध्वनितम् । अथ नीचीनदेहो दयितार्तिजोषः बुधार्दितां हांसीं पदवीं जग्राह । अथ निबर्हणानन्तरं नीचीनो देहो यस्य सः । तथा पराक्रमे कृतेऽपि अनुद्धत एवेति ध्वनयितुं 'विभाषाञ्चेरदिक् स्त्रियाम्' इति स्वार्थे खप्रत्ययः । ईनादेशः 'आयनेयी–' इति सूत्रेण । दयितानां भक्तानां या आर्तिस्तां स्वयं जुषते इति कर्मण्यण् । 'यदा यदा हि धर्मस्य' इति स्मृतेः । भक्तानुग्रहार्थमवतारान् करोतीति भगवता व्यासेन निर्णीतत्वात् । हांसीं हंसः सूर्यः । 'भानुर्हंसः' इति कोशात् हंसस्येयमतिप्रकाशरूपा या पदवी तां जग्राह । तमोरूपराक्षसबाढकत्वात् । 'पदवी सृतिः' इत्यमरः । कथंभूतां पदवीम् । बुधैः पण्डितैरर्दितां प्रार्थिताम् । 'अर्द गतौ याचने च' । भौवादिको धातुः । 'बुध वृद्धौ पण्डितेऽपि' इति सामान्यकाण्डे । 'हरिश्चन्द्रो रन्तिदेवो उञ्छवृत्तिं शिबिर्वलिः । व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥' इति भागवते परोपकारस्यातिवर्णनात् । स्वयं स्तुत्यस्तान् महर्षीन् तुष्टावेति ध्वन्यते ॥' अथ **नलपक्षे** व्याख्या—लक्ष्मणो लक्ष्मीवान् स एकं मारीचमादुद्रुवत् तेषां खगानां मध्ये इति प्रकरणमेव । 'शेषे' इति लक्षणं चाधिकारश्च । मरीचिभिर्व्याप्तं मारीचम् । शैषिकोऽण् । व्याप्तेऽर्थे सुवर्णमणिकान्तिभ्राजिष्णु-

ब्रह्ममण्डलप्रधानत्वात् अभ्यधाविष्ट । किंभूतः । उग्रतेजाः । परे तु नेशुः । पलायन्ते इति भावः । अथो पलायनानन्तरं नीचीनदेहः नीचीनो वामनीभूतो देहो यस्य सः । कपटेन ग्रहीष्य इति बुद्ध्या निश्चित्य दयितार्तिजोषो दमयन्तीतो या आर्तिस्तज्जोषः अपारकामबाधाव्याप्तदेहः कश्चनात्रार्थे सहायं कुर्यादिति समालोच्य हंसानां हंसस्य प्रधानस्य वा तस्यैव पदवीं सरणिं जग्राह । मार्गरोधाद्धस्तेन जग्राहेत्यर्थः । ब्रह्मप्रेरितः सोऽपि जगृहे । अन्यथा कथं गृह्येत । कथंभूतां पदवीम् । बुधार्दितां पण्डितैरर्दितां बाधिताम् । विहङ्गमनिग्रहस्य साधूनामनर्हितत्वात् । 'अर्द हिंसायाम्' चौरादिको धातुर्बोध्यः । क्तप्रत्यये द्वयोरेव तुल्यं रूपम् । तदेव छन्दः ॥

वैदेहमाश्रित्य पतिंवरोद्धं यज्ञार्थकेतं प्रभुमानयन्तम् ।
निमन्त्रितं धीरवरस्तदानीं विवाहचेता जनकास्पदं तत् ॥ ९ ॥

**रामपक्षे**—धीरवरः पण्डितश्रेष्ठो विश्वामित्रः तं प्रभुं तज्जनकास्पदमानयत् । प्रसिद्धार्थस्तच्छब्दः काव्यप्रकाशे व्याख्यातः । तत्प्रसिद्धं जनकास्पदं मिथिलापुरमानयत् प्रापयामास । किं कृत्वा । पतिंवरोद्धं यज्ञार्थकेतं वैदेहमाश्रित्य पतिंवरा स्वयंवरा सीता तस्याः सकाशात् उद्धा अधिकं शोभा यस्य सः । साक्षाल्लक्ष्मीः पृथ्वीतः प्रादुर्भूता यस्य यज्ञवाटे इति प्रतिष्ठाधिक्यं तदवधि तस्यासीत् । 'पतिंवरा च वर्या च' इत्यमरः । तदानीमेव कौशिकनिमन्त्रणार्थं जनकेनागतं यज्ञायायं यज्ञार्थस्तादृशः केतो निमन्त्रणं यस्य सः । 'केत श्रावणे निमन्त्रणे च' । चौरादिको धातुः । केतनं केतो भावे घञ् । तं वैदेहम् । विदेहानां देशानां राजा वैदेहो जनकः विदेहस्य युवापत्यं पुमान् इति वा वैदेहः । आश्रित्य पूजया योग्यया संसेव्येत्यर्थः । 'श्रिञ् सेवायाम्' । 'षडर्थ्या भवन्ति' इति श्रुतेः । अतः पूर्वकाले क्त्वो ल्यप् । कथंभूतं प्रभुं रामम् । निमन्त्रितम् । नितरामर्थेषु मन्त्रिता यस्य स इति बहुव्रीहिः । 'गोस्त्रियोः—' इति ह्रस्वम् । कथंभूतो धीरवरः । विवाहे चेतो यस्य सः । रामलक्ष्मणयोर्विवाहो जनकपुर्यां द्रुतं स्यादिति चिन्ता यस्य स इति ॥ अथ **नलपक्षे** वर्णनम्—धीरवरः तं प्रभुं वैदेहं यज्ञार्थकेतमानयत् । 'धीरः पण्डितमन्दयोः' इति धरणिः । तेषु श्रेष्ठो नैषधः कार्ये प्रभुं समर्थम् । कार्यशब्दोऽध्याहार्यः । यथा क्रियतामित्यत्र कर्ता स्वयमाक्षिप्यते तथात्रावसेयम् । क्रियाकारकसंबन्धस्य नित्यसंपृक्तत्वात् । वीनां पक्षिणां देहाः विदेहाः । विदेहानां हंसानामीशो वैदेहः । 'तस्येदम्' इत्यण् । 'शेषे' इति वाण् । 'विविष्किरपतत्रयः' इत्यमरः । तं हंसराजं यज्ञार्थः पञ्चमहायज्ञार्थस्तत्रैवोद्याने स्थानविशेषे रचितोऽभूत् । केतः स्थानम् । 'कित निवासे रोगापनयने च' । भ्वादौ धातुः । ततो घञि रूपम् । निवासे स्वार्थे सन्विधानं नाकार्षीत्, अतः सन्न । कथंभूतं तम् । पतिंवरोद्धं पतिंवरा स्वयंवरा दमयन्ती तस्या उद्धा अतिशयितः प्रकाशो यस्मात् । 'त्वद्योग्या अभूतपूर्वा दमयन्ती अस्ति । तदर्थमहं घटिष्ये' इत्याकारकः प्रकाशो हंसादेव नलस्य समजनिष्टः । पुनः कथंभूतम् । निमन्त्रितम् । नितरां मन्त्रिता गुप्तपरिभाषणं यस्य सः । 'चतु-

कर्णस्य मन्त्रस्य ब्रह्माप्यन्तं न गच्छति' इति बृहस्पतिः । 'मत्रि गुप्तपरिभाषणे' धातुः । किं कृत्वा । ईषदाश्रित्य । पूर्वं ग्रहणानन्तरं क्षणं तत्र स्थित्वेत्यर्थः । कथंभूतं यज्ञार्थकेतम् । तत्प्रसिद्धं जनकास्पदं पितुः स्थानम् । वीरसेनेनैव पित्रा पूर्वं पाठहोमादिपञ्चयज्ञार्थं तत्र रचितमित्यर्थो व्यङ्ग्यः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिच्छन्दः । अतो ब्रह्ममरालादद्भुताद्दैवान्मद्विवाहघटनं स्यादिति चेतो यस्य स इति गूढो व्यङ्ग्यः । इदं नलविशेषणं बोध्यम् ॥

सत्तर्कवामास्पदमिद्धतेजाः प्रयाय पूतां तनुमाचचार ।
परिच्छदस्य प्रगुणो नलो यो वाचंयमस्यास्य पराभिसारी ॥ १० ॥

**रामपक्षे**—इद्धतेजाः अस्य वाचंयमस्य परिच्छदस्य पूतां तनुमाचचार । इद्धं दीप्तं तेजो यस्य स इद्धतेजाः तादृशो रामः । 'वाचंयमपुरंदरौ च' इति सूत्रेण निपातितो मुनिवाचकोऽयम् । 'तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः' इत्यमरः । 'परिच्छदः परीवारः' इति हैमः । पाषाणभूताहल्याया मुनिशापेन पवित्रां तनुमकार्षीत् । आचरति कृञर्थे । 'अनुतिष्ठत्याचरति' इति भट्टमल्लकोशे । न्यायशास्त्रकारकत्वात् प्रमाणादिषोडशपदार्थनिरूपकत्वात् । (सत्तर्को गौतमः) तस्य वामा अहल्या तदास्पदं पाषाणीयस्थानमिति तात्पर्यार्थः । तत्पदमधिष्ठाय चरणरजःकणैरिति व्यज्यते । देवविषयरतिः कवेर्व्यङ्ग्या । उत्तमकाव्यलक्षणं काव्यप्रकाशे । कथंभूतो रामः । प्रगुणः सरलाशयः । 'ऋजावजिह्मप्रगुणौ' इत्यमरः । पुनः कथंभूतः । अनलः । 'अलं भूषणपर्याप्तिवारणेषु' । अलतीति अलः । नालः समर्थो यस्मात् । भक्तानुग्रहातिसमर्थः इति यावत् । पुनः कथंभूतः । पराभिसारी परेषु प्रल्हादादिषु अभि समन्तात्सरतीत्यभिसारी । 'दूरानात्मोत्तमाः पराः' इति त्रिकाण्ड्याम् ॥ **नलपक्षे** तु—इद्धतेजाः सत्तर्कवामास्पदं प्रयाय पूतां तनुमाचचार । इद्धं तेजोविशेषयुक्तत्वात् यस्य स इति बहुव्रीहिः । सौवर्णतनुत्वात् विरञ्चियानत्वात् । तथा हंसः । पटपुटीति चुरादौ दण्डके तर्कभाषार्थः । सन् तर्को भाषा संस्कृतरूपो येषां ते च ते वामा रमणीया विप्राः । 'वामौ वल्गुप्रतीपौ द्वौ' इत्यमरः । 'विपरीते सुन्दरे च वामो वामा तु योषिति' इति संसारावर्तः । तेषामास्पदं स्थानं यज्ञमन्दिरं गत्वा पूतां पवित्रां तनुमाचचार अकार्षीत् । होमधूमविप्रदर्शनादिना तनोः पवित्रत्वं शालायां सर्वेषां भवति । यतः—यो नलः पराभिसारी अस्य वाचंयमस्य परिच्छदस्य बुद्धिपरिकल्पितस्य प्रगुणः सोऽयं राजहंसस्तनुं पूतामाचचारेत्यन्वयः । प्रवर्णिता गुणा येन सः । 'प्रादिभ्यो धातुजस्य' इति वार्तिकवचनेन बहुव्रीहिर्बोध्यः । वाचंयमो भक्तिरस्येत्यण् । वृद्धत्वात्प्राक् वृद्धिर्न दृश्यते । वाचंयमभक्तस्यास्य नलस्येत्यन्वयः । तिरश्चामयं दौत्ये सर्वोपहसनीयः स्यात् इत्थं निचिन्त्य रहस्यभेदभिया विविक्ते मन्त्रमकार्षीत् । तत्रैव यज्ञशालायां गत्वा प्रोक्तवान् ॥

विदेहराजः पुरमच्छगत्य दत्तार्घकः सर्वसमक्षमेषः ।
हिरण्मयीं रत्नविचित्रितां तां ननन्द निःशेषपतद्विहाराम् ॥ ११ ॥

एष विदेहराजस्तां पुरमच्छगत्य ननन्द । विदेहानां हंसानां राजा । टच् । स पुरं यज्ञागारमगात् । 'अगारे नगरे पुरम्' इत्यमरः । यज्ञागारसंमुखं गत्वा । अच्छगत्येत्यस्यार्थः । ननन्द जहर्ष । कथंभूतः सः । दत्तार्घकः सर्वसमक्षं सर्वेषां प्रत्यक्षं विरञ्चिवाहनमिति क्षमापयित्वा विमोच्य पूजितत्वात् दत्तोऽर्घो यस्मै । चतुर्थ्यर्थे बहुव्रीहिः । कथंभूतां पुरम् । हिरण्मयीं स्वर्णमयीम् । रत्नैर्माणिक्यादिभिर्विचित्रिताम् । पुनः कथंभूताम् । निःशेषपतद्विहाराम् । निःशेषाः सकला ये पत्रिणस्तेषां रमणं यस्यां सा ताम् । पुरशब्दस्य स्त्रीलिङ्गत्वात्पूःशब्दोऽत्र ऊह्यः । द्वितीयायां तस्य रूपम् । 'पूरगारे च नगरे' इति हैमः । अथ **श्रीरामपक्षे**—एष विदेहराजः पुरमच्छगत्य ननन्द जल्हाद विदेहानां राट् विदेहराट् तस्य पुरं मिथिलामच्छगत्य संमुखं गत्वा ननन्द । कथंभूतः । सर्वसमक्षं दत्तार्घकः । 'शेषाद्विभाषा' इति कप् समासान्तः । 'मूल्ये पूजाविधावर्घः' इत्यमरः । कथंभूतां पुरम् । हिरण्मयीं स्वर्णप्रचुराम् । पुनः कथंभूताम् । रत्नैर्मणिभिर्विचित्रिताम् । विस्मयाधायिनीम् । पुनः कथंभूताम् । निःशेषपतद्विहाराम् । संपूर्णाः पतन्तः पक्षिणः पिकादयस्तेषां स्फीता समत्वाद्विहारः क्रीडा यस्यां सा । यद्वा अविद्यान्धकारप्रस्तपतज्जनज्ञानोपदेशरूपमार्तण्डप्रकाशद्वारा तेषां ब्रह्मानन्दास्वादो यस्यां सा । मोक्षधर्मादौ जनकमहाराजवृन्दस्य तादृशवर्णनस्य भारतादौ प्रसिद्धत्वात् । उपजातिच्छन्दः ॥

विना बभाषे कुहकं सवान्ते तपस्विना क्षोणिपतिर्विनीतः ।
कोदण्डमग्र्यं परिदर्शयंस्त्वं रामाय तोषं खलु लप्स्यसे मे ॥ १२ ॥

**श्रीरामपक्षे**—तपस्विना सवान्ते कुहकं विना विनीतः क्षोणिपतिर्बभाषे । 'यज्ञः सवोऽध्वरो यागः' इत्यमरः । सवान्ते यज्ञान्ते ।' कुहको नटविद्याज्ञे कुहकं कुहना छले' इति मेदिनी । तपस्विना विश्वामित्रेण । 'अस्मायामेधास्रजो विनिः' । तपःशब्दाद्विनिप्रत्ययः । 'तसौ मत्वर्थे' इति मत्वम् । अतो रुत्वं न । 'विनीतं शिक्षिते नम्रे' इति हैमः । विनीतो नम्रः क्षोणिपतिर्जनकः बभाषे उक्तः । किमिति । हे राजन्, रामाय अग्र्यं 'कोदण्डधनुर्माहेश्वरं परिदर्शयन् त्वं मे । पञ्चम्यर्थे शेषे षष्ठी । मत्तः तोषमानन्दं खलु निश्चयेन लप्स्यसे प्राप्स्यसि । संशयो नास्ति खलुशब्दार्थः । माहेश्वरस्य चापस्याग्र्यत्वं श्रेष्ठत्वं वर्तते । येन स्वयंवरे राजानः सलज्जाः स्वान् गृहान् गताः । रामस्तु तादृशधनुरारोपणे योग्यः समर्थत्वात् तव दुहितुर्वरस्त्वमपि परमानन्दं प्राप्स्यसि नान्यः कश्चिद्योग्य इति भावः । तत्र कपटं विना परमर्षिरुभयोर्हितं विधातुं प्रावर्तिष्टेति ध्वनयितुं कुहकं विनेति पदं प्रायुङ्क्त ॥ अथ **नलपक्षे** विवृतिः—सवान्ते । 'षुञ् अभिषवे' । 'पीडनं सुरासंधानं चाभिषवः' इति दीक्षिताः । निग्रहान्ते मोचने कृते सुखोपविष्टेन,

अत एव अतपस्विना संतापरहितेन विना पक्षिणा हंसेन । 'संतापतपसोस्तपः' इति हैमः । कुहकं विना छलं विना सत्यं राज्ञि दृष्ट्वा विनीतः क्षोणिपतिर्नलो बभाषे कथितः । किमिति । अघ्र्यं बन्धनं दण्डं परिदर्शयन् त्वं कोऽसि । 'अस्तिर्भवन्तीपरः [वृत्तः प्रक्षाः' इति] अप्रयुज्यमानोऽप्यस्तीति 'गम्यते' इति भाष्यकाराः । अतोऽसीति स्वयमेव संनिधत्ते । मे मत्तः खलु रामाया अयः प्राप्तिर्यस्मात् स प्राप्तिरूपश्चासौ तोषश्च तं मत्तो लप्स्यते । 'अय गतौ' भौवादिको धातुः । घञर्थे कविधानम् । ब्रह्मवाहनत्वादेवं पीडाकरः कोऽसि । एतत्प्रयोजनं मम तदागतः । दमयन्ती सत्पत्नी मद्वचनेन भवित्रीति भावः । उपजातिवृत्तम् । अकुहकं यथा स्यात्तथा विनीतः क्षोणिपतिर्नलो बभाषे इति ॥

स्फीतेन राज्येन न मोदमेषि कोशेन पूर्णेन न वाहनेन ।
यथेमकेन व्यतिपातिना पुरा प्रयाति नूनं गुणवान्भवन्भवान् ॥ १३ ॥

**रामपक्षे**—हे राजन्निति अध्याह्रियते । त्वं स्फीतेन राज्येन मोदं हर्षं नैषि न प्राप्नोषि न प्राप्स्यसि । वर्तमानसामीप्ये लट् भविष्यति । तथा पूर्णेन कोशेन नैषि न प्राप्नोषि । तथा वाहनेन नैषि यथा गुणवान् भवन् भवान् व्यतिपातिना इमकेन पुरा हर्षं प्रयाति प्रयास्यति स्फीतेन बहुना । 'मुद हर्षे' मोद इति घञ् रूपम् । कोशोऽर्थसमूहः । 'सर्वं स्याद्वाहनं यानम्' इत्यभिधानकोशः । गुणशब्दात्प्रशंसायां मतुप् । भवन्निति भूधातोः शतृप्रत्ययः । भवान् पूज्यार्थे युष्मच्छब्दार्थेऽवसीयते । व्यतिपातेर्णिनिः । प्रतिस्पर्धियोग्यपराक्रमकर्त्रेत्यर्थः । व्यतिशब्दः कर्मव्यतिहारद्योतकः । इमकेन कुमारेणाप्यमुनेत्यर्थः । 'ह्रस्वे' इत्यर्थे अकच् सर्वनाम्नः । प्रयाति प्रयास्यति । पुरेत्यासन्ने भविष्यति काले धनुर्भङ्गानन्तरमिति ध्वनितम् 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट् बोध्यः ॥ अथ **नलपक्षे** व्याख्यानं दर्शयति—यत्तदोर्नित्यसंबन्धात् 'तथा' इति व्याक्षिप्यते । हे राजन्, गुणवान् सत्यशीलदयाक्षमार्जवादिगुणयुक् भवान् त्वं यथा इमकेन पुरःस्थितेन हंसेन व्यतिपातिना ब्रह्मवाहनत्वात् आकाशे विशिष्टेभ्योऽपि अधिकमुड्डीयमानेन स्फीतेन न कोशेन न वाहनेन नन्दिष्यति । 'पात उड्डयने' । 'पातो निपातश्चादिनाशयोः' इति हैमः । व्यतिशब्दोऽतिशायनद्योतकः । मां विसृज तव कार्यमहं कर्ता । त्रिष्टुप्जगत्योरुपजातिः । 'इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम' इति वचनप्रामाण्यात् । ध्वनिकाव्यमुत्तमं दर्शितम् ॥

उदीरितोऽसाविति तेन शान्तो विसृष्टवानैशपरं विलोक्य ।
खगग्रहाभ्याग्रहणं चिकीर्षुः पौस्नं त्वरावत्तदुपाजहार ॥ १४ ॥

**रामपक्षे** वर्णनम्—तेनोदीरितः शान्तो जनकः इत्यसौ पौस्नं विसृष्टवान् । किं कृत्वा । ऐशपरं विलोक्य ऐशं माहेश्वरं धनुः तत्परं रामं विलोक्य । किं चिकीर्षुः । खगग्रहाभ्याहरणं चिकीर्षुः खगान् बाणान् गृह्णाति इति खगग्रहं धनुः तेषां ग्रहो ग्र-

हृणं यस्येति तस्याभ्याहरणं सभायां सर्वसमक्षं यदानयनं तच्चिकीर्षुः तत्कर्तुमिच्छुः । अथ त्वरावत्पौंस्नं तद्धनुरुपाजहार । सहस्राधिका मल्लप्रायाः पुरुषाः शीघ्रं महता कृच्छ्रेण निकटमानिन्युरित्यर्थः । पुंसां समूह इत्यर्थे स्नञ् प्रत्ययः । 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति सूत्रेण । 'ञित्वरा संभ्रमे' । घटादेः षित्त्वादङ् । अङन्तं स्त्रियामेव । ईशः शंकरः तस्येदमैशं तत्परं यस्य स इति बहुव्रीहिः । इमकेनेति पूर्वपद्यादनुवर्तते । इमकं राममित्यर्थः । 'अर्थवशाद्विभक्तिपरिणामः' । इत्थं भाष्यं जागरूकम् । 'अनाप्यकः' इत्यत्राककारकस्येत्यनादेशाभावः । विश्वामित्रविशेषणे विधित्सिते तेनेत्यस्य तमैशपरं विलोक्येति स्पष्टमेव ॥ अथ **नलपक्षे** व्याख्यानमाह—तेन पक्षिणा शान्तोऽनलोऽसौ इति व्यङ्ग्येनोदीरितः । पण्डितस्तं विसृष्टवान् विससर्ज । किं कृत्वा । ईशानामिन्द्रादीनामपीशो ब्रह्मा । त्यदादीनां बुद्धिस्थपरामर्शकत्वात् 'तस्येदम्' इत्यणि तस्येदमित्यत्रेदंशब्दस्येशार्थप्रतिपादनं बोध्यम् । स पर उत्तमो यस्य स इति बहुव्रीहिः 'दूरानात्मोत्तमाः पराः' इति त्रिकाण्ड्याम् । विरञ्चिराक्रोशं चरेच्चेन्ममानिष्टं स्यादिति शङ्कमानः । विलोकि विचारे द्रष्टव्यः । यद्यपि शालायां पूजित एवास्थात्पक्षी तथापि गच्छ यथेच्छमिति वाज्ञापितोऽभूदिति ध्वन्यते विसृष्टवानिति पदेन व्यज्यते । किं चिकीर्षुः । खगग्रहाभ्याहरणं चिकीर्षुः खगग्रहो हंसग्रहः तस्मादाद्वासुदेवाङ्गीः तस्या आहरणं स्वीकारः आसमन्तादङ्गीकारः । 'हरणं आपणं स्वीकारः स्तेयं नाथनं च' इति दीक्षिताः कौमुद्यां व्याचख्युः । 'अकारो वासुदेवः स्यात्' इत्येकाक्षरकोशः । 'अहिंसासत्यमस्तेयम्' इति धर्मलक्षणम् । 'न हिंस्यात्सर्वभूतानि' इति श्रुतिः । ताडनादिवधान्ता हिंसा प्रोच्यते इति विचार्येत्यर्थः । सात्त्विकानामिदं गर्हितमिति भावः । त्वरावत्पौंस्नं तदुपाजहार । अदूरस्थो बाह्यदेशं पुरुषसमूहस्त्वरावान् तच्छासनं विसर्जयत पक्षिण इत्येवंरूपं ह्युपाजहार । अधिकमा समन्तादङ्गीचक्रे इति भावः । 'उपोधिके च' इति ज्ञापकादुपशब्दार्थवृत्तित्वं सिद्धम् । ततश्च सर्वे विसर्जिता इत्यर्थः ॥

शरासनं वेगवशेन कृष्ट्वा रामोऽभनक्तं जनकाद्भुतप्रदः ।
विसिष्मिये भूपसभं पराक्रमं वीक्ष्यास्य मर्त्यावतरत्वमैट्ट ॥ १५ ॥

**रामपक्षे**—रामो वेगवशेन तच्छरासनं कृष्ट्वाभनक् । कथंभूतो रामः । जनकाद्भुतप्रदः । भूपसभमस्य पराक्रमं वीक्ष्य विसिष्मिये अस्य मर्त्यावतारत्वमैट्ट इत्यन्वयः । रामो दाशरथिर्वेगवशेन जववशात् शरासनं कृष्ट्वा आकृष्य अभनक् बभञ्ज । कथंभूतो रामः । जनकाद्भुतप्रदः तदाश्चर्यदः तं पराक्रमं वीक्ष्य । 'शौर्योद्योगौ पराक्रमौ' ।'ष्मिङ ईषद्धसने' । 'विस्मयोऽद्भुतगर्वे स्यात्' इति हैमः । अस्य वासुदेवस्य मर्त्यावतारत्वमैट्ट तुष्टाव । 'ईड स्तुतौ' । लुग्विकरणाल्लुङि रूपम् । साक्षान्नारायण एवावतीर्णोऽत्र । ऐश्वरं धनुर्भङ्कुं को वा समर्थो नारायणं विनेति भावः ॥ **नलपक्षे**—रामो नलः । '[नैगमौ द्वौ] बले रामो नीलचारुसिते त्रिषु' इत्यमरः । अतिसुन्दररूपत्वान्नलस्यारण्यपर्वणि भारते

वर्णितत्वात् । चारुवाची सर्वत्र रामशब्दः कोशप्रामाण्यात् । पूर्वं वेगवशेन तं हंसं कृष्ट्वा आकृष्य रागवेगात् शरासनम् । 'शॄ हिंसायाम्' । 'ऋदोरप्' करः शरः गुरु इति रूपाणि । शरो वधः । 'अस गतिदीप्त्यादानेषु' । आदानं ग्रहणं वधाय ग्रहणम् । 'ताडनादिवधान्ता या सा हिंसैव प्रकीर्तिता' इति मेदिनी । निग्रहाय ग्रहणमभनक् मर्दयामास । दूरीचकारेत्यर्थः । जातकारुण्यः परनिग्रहोपहिंसारूपमेव विचार्य दूरीचकार तदित्यर्थः । अथ जनकाद्भुतप्रदं विशिनष्टि—जनानां काद्भुते आनन्दाश्चर्ये प्रददातीति जनकाद्भुतप्रदो हंसः प्रकरणाल्लब्ध एव आश्चर्यं कृतवान् । 'सुखशीर्षजलेषु कम्' इति विश्वः । अथ भूपसभं पराक्रमं दृष्ट्वा वीक्ष्य अपि च मर्त्यावतरत्वं मानुषावतारं हरिमिव वीक्ष्य ऐट्ट । 'ईड स्तुतौ' लङ् । वर्णयामास । अवतरतो भावोऽवतरत्वं शत्रन्ताद्भावे त्वप्रत्ययः । इन्द्रवज्रोपेन्द्रवज्रयोरेवोपजातिः ॥

अभिख्यया या दमयन्त्यपूर्वलावण्यभाजः प्रथितेह सीता ।
सा राजवक्त्रोचितसङ्गभीतान्नलेन राजीववनी यथैव ॥ १६ ॥
शतादिरानन्द उपैतु तूर्णं राज्ञः कुलं हंसकुलैरमान्यः ।
चक्रेण शक्रेण समस्य तस्य सोऽयं स्वकार्यव्यवसायसायः ॥ १७ ॥

**रामपक्षे**—अपूर्वसौन्दर्ययुक्तान् स्त्रीसमूहान् दमयन्ती कान्त्या तिरस्कुर्वती या सीता प्रथितास्ति राजवक्त्रा सा उचितसङ्गभीतात् प्राप्तोत्येव । केन का इव । नलेन राजीववनीव । 'राजासौ रोहिणीप्रियः' इति कोशः । राजवद्वक्त्रं यस्याः सा चन्द्राननेति फलितार्थः । 'दमु उपशमे' । हेतुमण्ण्यन्तः । 'लावण्यं रामणीयकम्' इति धरणिः । 'बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च' । शतादिरानन्दस्तु कुलं पुरमुपैतु । कस्य । राज्ञः । किंभूतः । हंसकुलैरमान्यः । कथंभूतस्य राज्ञः । चक्रेण शक्रेण समस्य तस्य सोऽयं स्वकार्यव्यवसायसायः अस्ति । शतशब्द आदौ यस्य सः । उत्तरपदे आनन्दो यस्य स इत्यर्थाच्छतानन्दो गौतमपुत्रो नः पुरोहितस्तत्रायोध्यायां गच्छतु शीघ्रम् । किंभूतः । हंसकुलैरमान्यः । 'हंसो मराले सूर्ये च न्यासभेदेऽपि कीर्तितः' इति केशवः । 'कुलं गोत्रे च संघाते कुलं जनपदे गृहे' इति मेदिनी । हंसः सूर्यः कुलं येषां ते हंसकुलाः सूर्यवंश्याः तैर्न मान्यो यस्मात् । अथ वा एन भगवद्वासुदेवेनापि मान्यः । मान पूजायाम् । 'चक्रं चानीकमस्त्रियाम्' इति कोशः । कार्या ये व्यवसाया उद्यमास्तेषां सायोऽन्तः । कार्येषु निश्चितार्थ इत्यर्थः । सर्वथास्यार्थस्य कर्तव्यत्वात् । 'अन्तः स्वरूपे निकटे नाशनिश्चययोरपि' इति हैमः । 'उद्यमे व्यवसायः स्यान्निश्चयेऽपि च पुंस्ययम्' इति रन्तिदेवः ॥ अथ **नलपक्षे** व्याख्या—इह सीता । इः कामः, एहिंस इहसः सोऽस्यास्तीति इहसी तामीता मनसा प्रपन्ना अतिकन्दर्पभवन्मूर्तिपत्नी त्वमेव मनसा प्रागेव प्राप्ता । 'वीगति-' इत्यत्रेकारोऽपि धात्वन्तरं प्रश्लिष्यते' इति दीक्षिताः कौमुद्यामाहुः सर्वसंमतत्वात् । ततो निष्ठायाम् ईत इति रूपम् ।

टाप् । अभिख्यया नाम्ना 'अभिख्या नामशोभयोः' इत्यमरः । या दमयन्ती राजवक्त्रा सोचितसङ्गमीतात् । कथंभूता । अपूर्वलावण्यभाजः अपूर्वसौन्दर्यभाजां नारीणां मध्ये । यतश्च 'निर्धारणम्' इति निर्धारणे षष्ठी । एकत्वे च निर्धारणं भवति । 'जातिः पदार्थः' इति स्वीकारात् । 'मिदचोऽन्त्यात्परः' इति सूत्रेऽज्ग्रहणमत्र ज्ञापकं बोध्यम् । प्रथिता विख्यातास्ति । 'अस्तिर्भवन्तीपरः' इति भाष्यम् । चन्द्रानना सा भवत्पत्नी भवतु । योग्यत्वात् । 'णल गन्धे' । का केनेव । 'नलो नालमथास्त्रियाम्'[१] । कमलवनी नलेन यथा । त्वमपि नलनामासि कमलवनीस्थानीया सा तवैव योग्यास्तीति भावः । ननु तत्र दूतो घटकः कः स्यादित्यशङ्क्याह—हंसकुलैरमान्यः शतादिरानन्दः सोऽयं तूर्णं भीमस्य पुरम् उपैतु मल्लक्षणः पुरः स्फुरत्यक्षी प्रसिद्धः दौत्येन । शतपदमनेकसंख्यामवगाहते । देवशतेष्वपि श्रेष्ठः । आदिशब्दः श्रेष्ठवाची प्रथमस्याग्रेसरत्वात् । आनन्दयति रूपेण वाचा सर्वानित्यानन्दः । नन्दयतेः पचाद्यच् । हंसकुलैः नैकब्रह्मयानमरालैः न मान्यो यस्मादिति पञ्चम्यर्थे बहुव्रीहिः । उपैतु गच्छतु । कथंभूतस्य तस्य राज्ञः । चक्रेण बलेन इन्द्रेण तुल्यस्य कुण्डिनेश्वरस्य । अयं स्वकार्यव्यवसायसाय एव । आत्मन एव कार्योद्योगनिश्चयोऽस्तीति भावः । मदेकसाध्यं तत्प्रापणमिति ध्वन्यते । युग्मम् । 'षोऽन्तकर्मणि' । भावे घञ् । 'आतो युक्' । कोशः प्रागेवाभिहितः । तदेव वृत्तम् । मां दूतं शीघ्रं त्वमाज्ञापय पाण्डुत्वादिकामबाधां जहि इत्येवं हंसेन ध्वन्यते ॥

स राजहंसो वचनं महार्थं निगद्य मौनं जुजुषेऽभिरामम् ।
आरामभूतः प्रससाद रामो मध्येसभं सज्जनवन्दनीयः ॥ १८ ॥

**रामपक्षे**—राजहंसो जनको नाम अभिरामं महार्थं वचनं निगद्य मौनं जुजुषे । 'स्युरुत्तरपदे–' इत्यादिवाक्यात्कोशस्य हंसस्य श्रेष्ठवाचकत्वं ज्ञेयम् । राज्ञां मध्ये हंसमिवेति 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः । अभिरामं सुन्दरम् । महार्थमर्थगम्भीरं निगद्य तूष्णीं बभूवेत्यर्थः । 'जुषी प्रीतिसेवनयोः' । लिट् । कथंभूतो राजा । मध्येसभं सज्जनवन्दनीयः । आरामभूतो रामः प्रससाद । कथंभूतो रामः । सज्जनैर्वन्दनीय इति श्रीरामविशेषणमपि घटते । मध्ये पाठाद्देहलीदीपन्यायेनोभाभ्यां संबध्यते । 'वदि अभिवादनस्तुत्योः' । तृतीयासमासः । आरामभूत उपवनत्वं प्राप्तः । 'पारे मध्ये षष्ठ्या वा' इति मध्यशब्दपूर्वनिपातः । अयं भावः—शतानन्दयानेनाह्वानेन च पितुर्जनके प्रीतिमानभूद्रामः । अथ **नलपक्षे**—स राजहंसः हंसानां राजा महार्थं वचनमभिधाय मौनं सेवितवान् । कथंभूतम् । अभिरामं सुन्दरम् । रामोऽत्र नलोऽतिसुन्दरत्वात् । प्रागेवोक्तम् । 'नैगमौ द्वौ बले रामो नीलचारुसिते त्रिषु' इति

---

१. 'नाला न ना पद्मदण्डे' इति मेदिनीसंवादादमरेऽपि 'नाला नालम्' इत्यस्यैव पाठस्य संमतत्वादत्रापि 'नालेन राजीववनी' इति पाठस्यैव योग्यत्वात्.

वचनात् । नलस्य प्रक्रान्तत्वात् । नलायेति शेषः । मध्येसभं तत्र शालायां प्रसन्नोऽभूत् । कथंभूतः । आरामभूतः । ज्ञानोपदेशद्वारा तापापहारेण शैत्यकारकत्वात् । अत एवोद्यानत्वं प्राप्तः । सज्जनैर्वन्दनीयः । दयाक्षमार्जवसंतोषादिशालित्वात् । त्रिभिर्विशेषकम् । तदेव वृत्तम् ॥

विदर्भभूः प्रापि विनायकेन नरेशितुः शासनहारकेण ।

सुतस्य पाणिग्रहणं चिराय मा भूदिति प्रीतियुतोऽवदद्वराम् ॥ १९ ॥

**रामपक्षे**—विनायकेन विदर्भभूः प्रापि । 'विनायको गणपतौ शिक्षके दण्डधारके' इति हैमः । विशेषशिक्षकेण शतानन्देन । 'दृभी ग्रन्थे' । तौदादिकः । दर्भो ग्रन्थः । विशिष्टा दर्भा ग्रन्था यत्र वासिष्ठरामायणादयो ग्रन्था अज्ञानध्वान्तदलका यत्र तादृशसाकेतभूः प्राप्तेत्यर्थः । कथंभूतेन । नरेशितुः शासनहारकेण । नराणामीशिता जनकः तस्य शासनस्य हारकेण प्रापकेण । 'हृञ् हरणे' । ण्वुल् कर्तरि । 'ईश ऐश्वर्ये' । तृच् । प्रीतियुतः स मुनिः सुतस्य त्वत्पुत्रस्य परिग्रहणे चिराय मा भूदिति । वरां दशरथं गत्वा अवदत् । 'देवोद्धृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये' इत्यमरः । वरः श्रेष्ठः पुत्रो ह्यो रामो यस्य सः । 'अकारो वासुदेवः स्यात्' इति कोशः । वराशब्दस्य द्वितीयैकवचने वरामिति रूपमवबोध्यम् । जनकप्रेरितोऽहमागतः, धनुर्भङ्गानन्तरं विवाहो निर्णीतः, ससैन्यामात्यस्त्वं मिथिलां द्रुतं याहीति भावः ॥ अथ **नलपक्षे** व्याख्या—पूर्वं नलः प्रससाद । हंसवचनमाकर्ण्येत्युक्तं तत्पदेन व्यज्यते । यदि भवान् दौत्ये शक्तस्तर्हि गच्छतु कार्यं करोत्विति प्रसादे हेतुः । विनायकेन वीनां नायकेन हंसेन विदर्भभूः विदर्भदेशभूः प्रापि । 'चाणक्येन नन्दानादृतेन श्राद्धे जिघांसता नन्दान् गच्छता दर्भाश्चरणत उद्का उत्पाटितास्तस्माद्विदर्भदेशत्वं जातम्' इति बृहत्कथासरित्सागरे द्रष्टव्यं कथानुसंधानम् । कथंभूतेन । नरेशितुः नलस्य शासनहारकेण आज्ञापितवार्ताप्रापिणा । 'पार्थिवे तनये सुतः' इत्यमरः । विनायको हंसः वरां दमयन्तीं तत्रावदत् । सुतस्य राज्ञस्त्वद्योग्यस्य नलस्य त्वत्पाणिग्रहणं चिराय विलम्बेन मा भूदिति । कथंभूतः । प्रीतियुतः । 'षु प्रसवैश्वर्ययोः' इति धातोः सुत इति रूपम् । 'क्तिच्क्तौ च संज्ञायाम्' । ब्रह्ममरालवचनं ब्रह्मणा दैवेन लिखितमिदं स्वीकृत्य विहरिष्यसीति भावः ॥

भैमीं गुणैर्गुम्फितमूर्तिमाराद्भवत्कृतोद्वाहविधानशोभः ।

यदीह रामे निनयेद्विदेहभूस्तदैव सार्थक्यमुपैति नान्यथा ॥ २० ॥

**रामपक्षे**—यदीह रामो भैमीं निनयेत् तदैव विदेहभूः सार्थक्यमुपैति अन्यथा न । कथंभूतो रामः । आराद्भवत्कृतोद्वाहविधानशोभः । कथंभूतां भैमीम् । गुणैर्गुम्फितमूर्तिम् । दशरथं किमुवाचेत्याह—यदि इह अत्रावसरे । भीमाच्छंकरादेव यस्य सः भीमो जनकः तस्यापत्यं स्त्री भैमी । अन्यस्मान्नृपात्स्वप्रेऽपि यस्य भीर्नास्तीति भावः । 'टिड्ढा–' इति ङीप् । तां सीतामत्र परि-

णीय चेत्प्रापयेत् तदैव सा पुरी विदेहानां जनकानां भूः सार्थक्यं प्राप्नोति नान्यथा । श्रीसंकाशा सा नारायणेनैव रामेण संयोगमर्हति उत्कटबोधशालित्वं तेषामयैवोचितं भवति । अन्यथा नैव । कथंभूतो रामः । भवता कृता उद्वाहविधानशोभा यस्य सः । भवता तत्र शीघ्रं गन्तव्यम् । अतो जनकप्रेरितोऽहं समागत इति ध्वन्यते । कथंभूतां भैमीम् । गुणैः शीलसौन्दर्यादिभिर्गुम्फिता मूर्तिर्यस्याः सा । एवं च विलम्बो न कार्योऽद्यैव गन्तव्यमित्युक्तं भवति शतानन्देन मुनिना ॥ अथ **नलपक्षे** व्याख्या—हे राजपुत्रि, यदि त्वामिति शेषः । इह रामः इः कामस्तमपि सौन्दर्येण हन्ति ताडयती इहः स चासौ रामश्च अतिसुन्दरो नलः आत्मपुरं निनयेत् परिणीय गच्छेत् भीमस्यापत्यं स्त्री भैमी तां त्वां त्राणं निनयेत् तदैव विदेहभूः । 'पण्डा संवेदनं विदा' इति शब्दार्णवः । विदया बुद्ध्यैव ईहा व्यापारः क्रियामात्रं येषां ते विदेहाः नीतिशास्त्रपारीणास्तेषामियं भूः सार्थक्यं महात्मत्वमुपैति । नान्यथा । अन्यस्मै त्वां ददानो भीमो बुद्धिमान्द्यं लोके प्रकटयिष्यति इति हार्दोऽभिप्रायः । कथंभूतो नलो रामशब्दलक्षितः । भवत्कृतोद्वाहविधानशोभः । भवत्या कृता कण्ठे मालाप्रक्षेपेण स्वयंवरे उद्वाहविधानस्य शोभा यस्य सः । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति वार्तिकवचनम् भवत्या कृता भवत्कृता इति रूपनिष्पत्तिर्बोध्या । कथंभूतां त्वाम् । गुणैर्गुम्फितमूर्तिम् । 'आराद्दूरसमीपयोः' इत्यमरः । आरान्निकटकाले विवाहस्तव यथा स्यात्तथा यतनीयम् । त्रिष्टुब्जगत्योरुपजातिः । प्रस्तारे भेदवशादवसेया छन्दश्चिततत्त्वज्ञैः ॥

स राजहंसो निगृहीतसंवित्सत्तर्कजोषां पुरमाजगाम ।
विहाय सा खेचरवृत्रहेव नभोविमानैरिव वीतिवर्यैः ॥ २१ ॥

**रामपक्षे**—स राजहंसोऽपि पुरमाजगाम । राजश्रेष्ठो दशरथोऽपि पुरं मिथिलामागात् । कथंभूतो राजा । गृहीतसंवित् । 'स्त्री संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु' इत्यमरः । क्रियाकारः संकेत इत्यर्थः । तद्यज्ञ्यवाच्यवृत्तिं पुरस्कृत्य संप्रजगामेति तात्पर्यार्थः । कथंभूताम् । सत्तर्कजोषाम् । सन्तस्तर्का यस्मिन् स गौतमस्तत्प्रधाना अन्ये च मुनयो यत्र सत्तर्कं जुषन्ते इति सत्तर्कजोषाः । अर्शआद्यच् । अस्यां सन्तीति पूर्विशेषणम् । कुतर्कश्रयणं यत्र स्वप्नेऽपि नास्ति 'किमीहः किंकायः' इत्यादिरूपः । तादृशीं नगरीं नभोविमानैरिव वीतिवर्यैः नभ आकाशं वेगेन मान्त इव । 'मा माने' धातुः । उत्प्रेक्षालंकारः । नभसो विशेषेण मानं येषां ते । वीतीनां तुरगाणां वर्याः श्रेष्ठास्तैरश्वैरतिशीघ्रैर्जगाम । सपरिच्छ इति भावः । 'घोटके वीतितुरग–' इति कोशः । केन क इव । विहायसा खेचरवृत्रहा इव । उपमालंकारः । शब्दालंकारसंसृष्टिकाव्यं काव्यप्रकाशे स्फुटीकृतम् ॥ अथ **नलपक्षे** व्याख्या—स राजहंसो ब्रह्ममरालोऽपि सत्तर्कजोषां नलनगरीमाजगाम । विहायसा आकाशमार्गेणेत्यन्वयः । कथंभूतः । गृहीतसंवित् अवश्यं तस्यैव नलस्य वरणं कर्ताहं इति दमयन्तीतः प्राप्य निःसंदेहसंकेतः । संवि-

त्संकेत इति प्रागेव व्याख्यातम्। क इव। खेचरवृत्रहा गरुड इव। कैः सार्धम्। तैः स्वकीयैर्हंसैर्बान्धवैः सार्धम्। कैरिव। नभसि विमानैरिव व्योमयानैरिव विरश्चैर्विमानत्वात्तेषाम्। वीनां पक्षिणामीतिर्गतं तेन गतेन वर्याः श्रेष्ठाः संडीनोड्डीनपारीणास्तैः सहेति निर्गलितोऽर्थः। 'विशेषणसूत्रे बहुलग्रहणाद्वृक्षः शिंशिपा शिंशिपावृक्ष इति प्रयोगा जायन्ते' इति भाष्ये भवद्व्याख्यानादीनि वर्यपरनिपातो जात इति बोध्यम्। अत्रोपेन्द्रवज्रेन्द्रवज्रयोरुपजातिः॥

पुरस्क्रियां तस्य यथा विधानं विधाय हांसप्रवरस्य राजा।
वार्तां किलाचूचुददप्रमेयं सुसत्यवद्यं गणसेव्यमानम्॥ २२॥

**रामपक्षे**—राजाऽप्रमेयं दशरथं वार्तमचूचुदत् किल। किं कृत्वा। हांसप्रवरस्य तस्य यथा विधानं पुरस्क्रियां विधाय। कथंभूतं दशरथम्। सुसत्यवद्यम्। पुनः कथंभूतम्। गणसेव्यमानम्। प्रकरणाद्दशरथः प्रक्रान्तः। 'वार्तं फल्गुन्यरोगे च' इत्यमरः। कुशलमित्यर्थः। चुदिः पृच्छायामपि वर्तते। 'अहमपीदमचोद्यं चोद्यम्' इति महाभाष्ये तद्राजसूत्रे पृच्छायां प्रयोगात्। विक्रमादिना प्रमातुमशक्यमप्रमेयम्। 'शकि लिङ् च' इति कृत्यप्रत्ययः। 'हंसः सूर्ये मराले च हंसो जीवात्मनि स्मृतः' इति यादवः। हांसानां राज्ञां प्रवरस्य श्रेष्ठस्य तस्य पुरस्क्रियां पूजां विधाय कृत्वा। कुशलं पप्रच्छेति तात्पर्यार्थः। 'वदः सुपि क्यप् च' इति पक्षे यत्। अतिसत्यवचनमित्यर्थः। गणेन सेनासमूहेन सेव्यमानमाराध्यमानम्॥ अथ **नलपक्षे**—राजा नलः तस्य हांसप्रवरस्य हंससमूहश्रेष्ठस्य। 'तस्य समूहः' इत्यण्। यथाविधानम्। विधानमतिक्रम्येत्यव्ययीभावः। पुरस्क्रियां पूजां विधाय वार्तं कल्याणमचूचुदत् किल पुनः प्रसिद्धम् अनुपमं सत्यवादिनं गणेन हंससमूहेन सेव्यमानमन्वीयमानम्। उपजातिवृत्तम्॥

गुरुर्वसिष्ठः करपल्लवेन युनक्तु वैवाहिकवर्यदिष्टे।
वावर्तनं साकृत पूर्वमेव वधूर्नृपेत्याह च तं विदेहः॥ २३॥

**रामपक्षे** व्याख्या—च पुनर्विदेहस्तमित्याह—वसिष्ठो गुरुरय वैवाहकवर्यदिष्टे। सेति वर्तते। 'अर्थवशात् विभक्तिपरिणामः' इति परिभाषा भाष्ये रूढा। तस्याः करपल्लवेन श्रीरामकरपल्लवं युनक्तु। विवाहे दीव्यन्तीति वैवाहिकाः। शशिकरमूलादिभगणा ज्योतिःशास्त्रोक्ताः सन्ति तादृशे वर्ये निर्वेधे भे संयोजयतु। दिष्टे काले प्रशस्ते। वधूः सीता धनुर्भङ्गानन्तरं वावर्तनं पूर्वमेवाकृत। 'वृतु वरणे'। वाग्रहणं वृतुधातोराद्यावयवमिच्छन्त्याचार्याः। अत एव 'वृत्ते तु वृत्तवावृत्तौ' इत्यमरः। अवारीदिति। माल्येति भावः। हे नृपेति संबोधनं जनकीयम्। अणीयान् विलम्बोऽपि मम नास्ति। घटकता भवदधीनेति भावः॥ अथ **नलपक्षे** व्याख्या—च पुनर्विदेहस्तमाह—वेः पक्षिणो देहो यस्य सः। आहेति बभूवेत्यर्थेऽव्ययं वर्तते। हे नृप, वसिष्ठः सुमतिः पुरोधाः। 'अतिशयेन वशी वसिष्ठः' इत्यतिशायन इष्ठन्प्रत्ययः। गुरुर्महान्। 'गुरुर्निषेकादिकरे

पित्रादौ सुरमन्त्रिणि । दुर्जरालघुनोश्चापि गुरुर्महति वाच्यवत् ॥' इति विश्वः । महान् विद्वान् सुमतिरित्यर्थः । तदीयकरपल्लवेन त्वदीयकरपल्लवं युनक्तु । 'युजिर् योगे' लोट् । अहं तथा वाग्मितां व्यधां यथा नलमेव स्वयंवरे वरिष्यामि पुरुषान्तरनामग्रहणमपि न करिष्य इति प्रत्यज्ञास्त । सा श्रेयः परं ब्रह्मवाक्यादरीरधं गमनमात्रविलम्बोऽयं पदार्थ इति भावः । ब्रह्मयानत्वात्कामरूपिता तस्य संप्रति विदेहत्वं स्वीकृतमिति ध्वनयितुं विदेहपदं प्रक्षिप्तम् ॥

स जालपादः पुरमाजगाम महेनलो धोरणतोऽभ्ययासीत् ।
तत्रान्तरे देवऋषिश्च नाकं शक्रास्पदं प्राप जवेन जिन्वन् ॥ २४ ॥

**रामपक्षे**—स जालपात् अः परम् आजगाम । अनलः सन् धोरणतो महे अभ्ययासीत् । तत्रान्तरे देव ऋषिश्च नाकं जिन्वन् शक्रासदं जवेन प्राप । 'जल घातने' । जालं घातनं तेन सह वर्तन्ते इति सजालाः हिंस्रा राक्षसादयस्तेषु पादो यस्य सः । रक्षोमूर्धसु पादप्रहारदानक्षमः ओ वासुदेवो रामः परं पितरम् । 'दूरानात्मोत्तराः पराः' इति तृतीयकाण्डे । 'पॄ पालनपूणयोः' । पिपर्ति पालयतीति परः पोषकं पितरं पूर्वमाजगाम । स्वकेतादागतं प्रत्युज्जगामेत्यर्थः । ततो नालः समर्थो यस्मात् । अलं भूषणपर्याप्तिवारणेषु । अलतीत्यलः । पचाद्यच् । न अलो यतः । धोरणेनेति धोरणतः । 'आद्यादिभ्य उपसंख्यानम्' इति वार्तिकेन तृतीयार्थे तसिप्रत्ययः । 'सर्वं स्याद्वाहनं यानं युग्मं पत्रं च धोरणम्' इत्यमरः । वाहनेन महे विवाहोत्सवशालायामभ्ययासीत् । अगमत् । परिणयार्थमिति तात्पर्यम् । तत्रावसरे देवो राजा दशरथः ऋषिर्वसिष्ठश्च नाकं न विद्यते अकं दुःखं यस्मिन् सः नाको ज्ञानपूर्णः ब्रह्मानन्दास्वादं तं जनकं जिन्वन् प्रीणयन् शक्रास्पदमिन्द्रासदतुल्यस्थानम् । 'आस्पदं प्रतिष्ठायाम्' निपातनम् । उद्वाहस्थानं प्राप । पृथक् पृथक् । 'जिवि प्रीणने' जिन्वन् प्रीणयन् ॥ अथ **नलपक्षे** व्याख्या—स जालपादो हंसः । 'जालपादो मराले स्यात्' इति हैमः । जालाकाराः पादाः अस्येति स हंस उत्कृष्टं परं ब्रह्मलोकमगात् । तत्र महे नलो धोरणतो धोरणेन धोरणं यानमारुह्य । ल्यब्लोपे पञ्चमी । महे विवाहशालायां स्वयंवरेऽभ्ययासीत् । तत्रान्तरे देवऋषिर्नारदश्च । समासेऽप्ययं प्रकृतिभावः । 'ऋत्यकः' इति । जवेन वेगेन जिन्वन् प्रीणयन् नाकं निरन्तरसुखम् । 'अकं पापे च दुःखे च' इति विश्वः । 'नभ्राणनपान्-' इति प्रकृतिभावः । शक्रास्पदममरावतीं प्राप । पूर्ववदुपजातिवृत्तम् । 'राजा भट्टारको देवः' इति कोशः ॥

अपूपुजद्विष्टरगन्धमाल्यैर्देवं मुनिं संविधया यथावत् ।
भैमीं स्फुरन्तीं प्रभयातिसर्वो जिष्णुर्विवोढुं यतते न किंवा ॥ २५ ॥

**रामपक्षे**—अतिसर्वो जनकः ज्ञानविज्ञानसंपत्त्या सर्वानतिक्रान्तो जनकः विष्टरगन्धमाल्यैर्यथावत् देवं दशरथं मुनिं वशिष्ठं गुरुं तेषां संविधया सामग्र्या मधुपर्कादि-

भिरपूपुजत् आनर्च । 'पूज पूजायाम्' । चौरादिको धातुः । चङ्परे णौ रूपम् । उत्तरालंकारेण आह चेति लब्धम् । जिष्णुः ग्स्नुप्रत्ययान्तः । रामः प्रभया कान्त्या स्फुरन्तीं भैमीं सीतां भीर्माघस्य सः भीमो जनकः तस्यापत्यम् । 'तस्येदम्' इत्यण् । 'टिड्ढाणञ्–' इत्यादिना ङीप् । वा अवधारणे प्रश्ने वा । विवोढुं परिणेतुं न यतते किम् । 'यती प्रयत्ने' । एतावद्विलम्बो न कर्तव्यः । सुलग्नातिवर्तनमन्याय्यमिति भावः ॥ अथ **नलपक्षे**—जिष्णुः पुरंदरः । 'जिष्णुर्लेखर्षभः शक्रः' इति वचनात् । यथावत् तदर्हमिति संविधया । 'विधा विधौ प्रकारे च' इति कोशः । विष्टरगन्धमाल्यैः । विष्टर आसनम् । गन्धश्चन्दनम् । माल्यं माला । एभिरुपचारैर्देवं मुनिं नारदर्षिमपूपुजत् । आनर्च । उत्तरालंकारेण तद्वाक्यं वक्ष्यमाणमूह्यम् । जिष्णुः पुरंदरो भवानतिसर्वो भूत्वा प्रभया स्फुरन्तीं भैमीं वाशब्दः कक्षे । निपातानामेकार्थत्वात् । विवोढुं न यतते किम् आश्चर्यमिदम् । इन्द्राण्या तव फल्गुरूपया किं भवति यदि दमयन्तीं स्वयंवरे न लभसे तर्हि त्रिलोकीपत्यभिमानित्वं तव व्यर्थमेवेति ध्वनितम् । पूर्ववद्वृत्तम् ॥

आनन्दशब्दोत्तरमाह सौरं वचोविलम्बं गमयन्सुलग्ने ।
जितोर्वशीकां सुरराड् विलोकितुं वैवाहशालं स हरिः प्रतत्वरे ॥ २६ ॥

**रामपक्षे**—आनन्दशब्दोत्तरः शतानन्दो नाम सौरं दशरथं सूरस्य सूर्यस्य गोत्रापत्यं पुमान् सौरः तं वच आह विलम्बं गमयन् शीघ्रतां ज्ञापयन् । य एव गत्यर्थास्त एव ज्ञानार्थाः । 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' इति भाष्यात् । किमाहेत्याह—अविलम्बमस्तु विलम्बाभावोऽस्तु कार्ये इति । सुरराट् रामो जितोर्वशीकां सीतां विलोकितुं द्रष्टुम् । 'नद्यृतश्च' इति कप् । वैवाहमुद्दिश्येत्यध्याहारः । तत्वरे त्वरया जगाम ॥ अथ **नलपक्षे**—आनन्दशब्दोत्तरः । 'सत्यं ज्ञानमानन्दं ब्रह्म' इति श्रुतिः । आनन्दस्य श्रीकृष्णाख्यब्रह्मणः । शब्द उपसर्गाद्याविष्कारे च । शब्दनं शब्दः । भावे घञ् । अद्वैतब्रह्मनामकीर्तनमेव उत्तरं यस्य सः नारदः सौरं सुराणामीशम् । 'तस्येदम्' इत्यण् । सुलग्ने दमयन्तीविवाहलग्ने अविलम्बं शैघ्र्यं गमयन् ज्ञापयन् वच आह । पूर्वोक्तं वचनमुज्जगारेत्यर्थः । सुरराट् इन्द्रः । जितोर्वशीकां तां विलोकितुं वैवाहशालं विवाहकर्तारो भूपा वैवाहाः । 'शेषे' इत्यण् । वैवाहानां राज्ञां शाला वैवाहशालम् । 'विभाषा सेना–'इति नपुंसकत्वं ह्रस्वत्वं बोध्यम् । उद्दिश्येत्यध्याहारः । प्रतत्वरे त्वरया अव्राजीदित्यर्थः । कथंभूतः हरिः । यमादिसहितः । उपलक्षणतया व्याख्यानम् । 'का प्रीतिः सह मार्जारैः' इतिवत् । त्रिष्टुब्जगत्योरुपजातिवृत्तम् ॥

आमोदवांस्तं पवनः सिषेवे स्वःकौसुमोद्भ्रान्तपडुद्विरेफः ।
प्रातिष्करशीं वानल आतनोत्तदा प्रियासमक्षं गत उग्रतेजाः ॥ २७ ॥

**रामपक्षे**—स्वःकौसुमोद्भ्रान्तपडुद्विरेफः आमोदवान् पवनः तं सिषेवे । कुसुमानां समूहः कौसुमम् । 'तस्य समूहः' इत्यण् । स्वर्गस्य कौसुमं मान्दारपारिजातं तत्रोद्भ्रान्ताः

पटवो गुञ्जनप्रवीणा द्विरेफा यस्मिन् सः पवनो वायुः तं रामं भगवन्तमगोचरस्तदा सेवितवान् । 'षेवृ सेवने' लिट् । उग्रतेजा वा निश्चयेन तदा अनले वैवाहिकेऽग्नौ ज्वलति सति प्रातिष्कशीं सहायतामातनोत् । वेदवाक्यैरपरित्यागं जन्मपर्यन्तं प्रियायाश्चकारेत्यर्थः । 'प्रतिष्कशश्च कशेः' इति सुट् ब्राह्मणादित्वात्ष्यञ् । षित्वान्ङीष् । 'अस्थिभिरस्थीनि संदधामि' इति वचनात् । 'प्रतिष्कशः सहाये स्याद्वार्ताहरपुरोगयोः' इति विश्वः । कथंभूतः प्रियासमक्षं गतः । अञ्चलग्रन्थ्यनन्तरं मण्डपे ह्यावने ध्यात इति भावः । प्रिया सीता तस्याः समक्षं प्रत्यक्षं गतः । 'प्रतिपरसमनुभ्योऽक्ष्णः' इति समासान्तः ॥ **नलपक्षे**—उग्रतेजा नल इन्द्रस्य तदा दौत्यं प्रातिष्कशीमातनोत् चकार । इन्द्रेण 'त्वमेवास्मत्कामव्यथावारणाय गच्छ, अन्तर्धानविद्यया मद्दत्तया कोऽपि जनो न द्रष्टा' इत्युक्तः । कथंभूतः । प्रियासमक्षं गतः । 'आमोदः सोऽतिनिर्हारी' इति कोशः । स्वःकुसुमादिविशेषणं सौन्दर्यद्योतकम् । पक्षद्वयेऽपि तुल्यः परिकरालंकारः । त्रिष्टुब्जगत्योरुपजातिवृत्तं बोध्यम् ॥

नारस्य सो गोचर एव हारं पर्यष्टवीत्तत्स्वयमेव तत्र ।
विहाय तत्किं जगदीश्वरेण संपर्चनं वामहतश्चरेत्किम्(त्कः) ॥ २८ ॥

**रामपक्षे**—तत्र शालायां प्रकान्तत्वात्पूर्वं स जनकः कन्यापिता नारस्य नरसमूहस्य अविषय एकान्तत्वात्, हारं पर्यष्टवीत् । हरेर्नारायणस्यावतारं नारदाद्युक्तं रामं वर्णितवानित्यर्थः । इत्याह चोत्तरालंकारेण तद्वैष्णवं धाम जगदीश्वरेण संपर्चनं संयोगं त्यक्त्वा को वामः प्रतिकूलकारी अत्र कं पुरुषान्तरं गच्छेत् । आत्मद्वेत्यर्थः । तस्मादुचितकारित्वं संप्रति ममैव वृत्तम् । किमन्यत्कुत्सितमेव ॥ अथ **नलपक्षे**—नारस्य रक्षिवर्गस्य राजमन्दिरेऽगोचरोऽन्तर्धानविद्यया स नलस्तत्र कन्यापुरे स्वयमेव हारमिन्द्रचरितं पर्यष्टवीत् पुनः पुनर्वर्णयांचक्रे । तज्जगदीश्वरेण संपर्चनं विहाय को वामो मन्दो मे संपर्चनमितोऽत्र चरेत् । न कोऽपीति काकुव्यङ्ग्यम् । त्रिलोकनाथेन शचीपतिना सह नन्दनादिवनेषु रंस्यसे वयं मानवाः के वराका इति भावः । वा निश्चयः । एवं ब्रुवाणस्य मनसा सत्यवादित्वं ध्वनितम् । उपजातिवृत्तम् ॥

सखीसहस्रेण समन्विता तां चेतो हरन्तीमपि वैबुधस्य ।
अनन्यचित्तां समवेक्ष्य नान्यगेत्यचष्ट जिष्णुं स परीत्य तत्र ॥ २९ ॥

**रामपक्षे**—तत्र स परीत्य अनन्यचित्तां तां नान्यगेत्यचष्ट । कथंभूताम् । जिष्णुं नार्यन्तरजयनशीलाम् । कर्तरि ष्णुप्रत्ययः । पुनः कथंभूताम् । सखीसहस्रेण समन्विताम् । पुनः कथंभूताम् । वैबुधस्यापि चेतो हरन्तीम् । अग्निमिति शेषः । सोऽग्निं परिक्रम्य अन्यत्र रामं विना नास्ति चित्तं यस्याः सा ईदृशीं तां वीक्ष्य अन्यगा मनसापि नास्तीति अचष्ट । चक्षिङ् दर्शनेऽपि ज्ञानदृष्ट्या विचारयामास । लङि रूपम् । विबुधानां समूहो वैबुधं तस्य । तडिद्वद्द्योतमानां विस्मायकरूपां समवेक्ष्य तुतोष ।

मनसा रामस्तदेति भावः ॥ नलपक्षे—स परीत्य तत्र इन्द्रादिस्थाने पराङ्गत्य अन्यगा सा नास्तीति जिष्णुमिन्द्रमचष्ट कथयामास । 'चक्षिङ् व्यक्तायां वाचि ।' अर्थद्वयं तिङन्ते दर्शितम् । किं कृत्वा । अनन्यचित्तां समवेक्ष्य । नान्यत्र चित्तं यस्याः सेति बहुव्रीहिः । कथंभूताम् । विशेषणपदं प्राग्वत् । कन्यापुरे तादृगद्भुतरूपा मया दृष्टा । मां विहायेन्द्रपत्नी भवेति चोद्यमाना नाजीगणद्युष्मान् मामेवावृणीतेति तात्पर्यार्थः । 'अभावे नह्य नो नापि मा स्म मालं च वारणे' । माशब्दोऽव्ययं निषेधार्थेऽमरेण प्रतिपादितः । 'स्वरादिनिपातमव्ययम्' इति सूत्रे मनोरमायां दीक्षिता अप्याहुः । मान्यगा[1] । नान्यगेत्यर्थः । त्रिष्टुब्जगत्योरुपजातिः ॥

हरे विजानीहि नरस्य वृत्तं प्रतिष्कशत्वं कृतवान्यथाहम् ।
उजिजिझषास्या मनसः कदाचिन्नैवास्ति मे कौ स्रुतिकत्वबुध्या ॥ ३० ॥

रामपक्षे—पुना रामो जिष्णुं रूपेण स्त्रीजित्वरीं सीतामाह—हे हरे, हरा वशीकारिका चासौ ईर्लक्ष्मीरिव तत्संबोधनम् । हे हरे मद्वशीकर्त्रि सीते, नरस्य वृत्तं विजानीहि । 'नृ नये' । पचाद्यच् । नयतस्य मे वृत्तं चरित्रं विजानीहि । यथाहं वह्निसमीपे शपथानकार्षं प्रतिष्कशत्वं सर्वथा सहचरो भविष्यामीति कदाचिन्मे मनसोऽस्यास्तव उजिजिझषा नास्ति । 'उज्झ उत्सर्गे' जिहासा इत्यर्थः । सन्नन्तादप्रत्ययः । केन हेतुना । कौस्रुतिकत्वबुद्धया । 'कुस्रुतिर्निकृतिः शाठ्यम्' इत्यमरः । कुत्सिता स्रुतिः शीलमस्य कौस्रुतिकस्तत्त्वम् । कपटित्वबुध्या रूपसाधनं प्रतिष्कशशब्दस्य कोशश्च प्रागेव दर्शितः ॥ अथ नलपक्षे—हरा चेतोहरा ई त्रिलोकीशत्वलक्ष्मीर्यस्य स इति तत्संबोधनम् । हे हरे, नरस्य मे वृत्तं साध्वसाधु विजानीहि यथाहं तव प्रतिष्कशत्वं वार्ताहरत्वं कृतवान् । दौत्यमित्यर्थः । यूयं देवाश्चैतज्जानीषे सर्वसाक्षित्वात् सत्यमसत्यं वा अस्या दमयन्त्या मे मनसः उजिजिझषा नैवास्ति । प्रतिसंदेशं भवतेऽवोचत्किं करवाणि अहम्, कालत्रयेऽपि मां विहाय पत्यन्तरं करोति, मम तत्र को दोष इति भावः । प्राग्वद्वृत्तम् ॥

तस्यां सभायां समलंकृतायां गतव्यलीकः स्थितिमाततान ।
सकौतुका खे सुरपालिरस्थान्नार्पी तु रामान्यसुरान्निरास्थत् ॥ ३१ ॥

रामपक्षे—गतव्यलीको रामः समलंकृतायां तस्यां सभायां स्थितिमाततान । 'व्यलीकं त्वप्रियेऽनृते' इत्यमरः । गतो व्यलीको यतः सत्यवादी रामः तस्यां सभायां स्थितिमवस्थानंचकार । तदानीं रामविवाहोत्सवदर्शनाय खे सकौतुकासुरपालिरस्थात् । 'पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु' इति तार्तीयीकेऽमरः । नार्पी सीता तु । नृपस्यापत्यं स्त्री (रामान्यसुरान् निरास्थत् तत्याज) रामान्यसुरान् खेऽवस्थितान् हताशान् कृत्वा राममेवावृणीतेति भावः ॥ अथ नलपक्षे—छलेन पञ्चनलीत्वं भूमिष्ठत्वं विधाय दमयन्त्याशया याकरोत् सा दमयन्ती सत्ये नखावस्थानं स्वचिह्नं विधाय तस्थौ सा नलमेवावृणीतेति सत्यपाशेन

---

१. मूले 'नान्यगा' इत्यस्य स्थाने 'मान्यगा' इति पाठः स्यात्.

बद्धेत्यद्भुतो रसः। उत्तरालंकारेण सर्वो गम्भीरार्थो लभ्यतेऽलंकारस्यैव तादृशी शक्तिः समुज्जृम्भत इति ज्ञेयम्। रामशब्देनाभिरामः सुन्दरो नल एव। कोशः सुन्दरवाची प्रागेव दर्शितः। पूर्वार्धं नलपक्षेऽपि समानम्। प्राग्वद्वृत्तम्॥

वृन्दारका प्राप्तवरः स पावकः सौरीं प्रतिश्रुत्य परार्ध्यवर्णाम्।
इयेष गन्तुं समितः प्रतीक्ष्यः संप्राप्य सयौतकमुन्नतेच्छः॥ ३२॥

**रामपक्षे**—स पावकः प्रतीक्ष्यः समितो गन्तुमियेष। 'पूञ् पवने'। अहल्यापावनः स रामः सर्वेषां पूज्यः। 'पूज्यः प्रतीक्ष्यः' इति कोशः। समितः सभातः गन्तुमयोध्यां प्रति इयेष। यद्वा समितप्रतीक्ष्य इत्यविसर्गः पाठः। संगतपूज्यः दशरथवसिष्ठादिसहितः। कथंभूतः। वृन्दारकै रूपिक्षत्रियैरपि। 'वृन्दारकौ रूपिमुख्यौ' इति कोशः। अप्राप्ता वरा श्रेष्ठा यस्य स इति बहुव्रीहिः। किं कृत्वा। परार्ध्यवर्णां श्रेष्ठवर्णां सौरीम्। 'तस्येदम्' इत्यण्। सूर्यस्य प्रभामिव प्रतिश्रुत्य अङ्गीकृत्य। परिणीयेति यावत्। पुनः किं कृत्वा। सयौतकं संप्राप्य उन्नतेच्छो महेच्छः सन् कुञ्जरदासीदासादियुतं जनकदत्तं परिबर्ह संप्राप्य स्वयोग्यमिति तात्पर्यार्थः। 'यौतकादि तु यद्देयं प्रदायो हरणं च तत्' इति त्रिकाण्ड्याम्॥ अथ **नलपक्षे**—वृन्दारकेभ्यः इन्द्रादिभ्यः संतुष्टेभ्यः आप्राप्तवरं नानावरान् प्राप्य स्वत एव सत्यपूतत्वात्कथाभिः पावकः कलिदोषघ्नः संगतपूज्यः सुमत्यादिपूज्यः गन्तुं निषधपुरीमियेष अवाञ्छत्। 'पूञ् पवने'। ण्वुल्। किं कृत्वा। परार्ध्यवर्णां सौरीं सूर्यप्रभामिव दमयन्तीं प्रतिश्रुत्य अङ्गीकृत्य विवाहाग्नौ। किं कृत्वा। उन्नतेच्छः सयौतकं योग्यं पारिबर्हं संप्राप्येत्यर्थः। पूर्ववत् त्रिष्टुब्जगत्योरुपजातिवृत्तम्॥

पदं स्वकीयं त्रिदशाः समीयुः पुरीं निजां क्षोणिपतिः प्रतस्थे।
त्रियोजनं यावदतीतवान्पथं तावत्सपत्नैरुदजृम्भ(म्भ्य)ताध्वनि॥ ३३॥

**रामपक्षे**—कौतुकद्रष्टारस्त्रिदशाः प्रसन्नाः स्वकीयं पदं समीयुः। 'इण् गतौ' लिट्। जग्मुः। क्षोणिपतिर्निजां पुरीं प्रतस्थे। यावत्त्रियोजनं पथम् 'वाटः पथश्च मार्गश्च' इति त्रिकाण्डशेषः। त्रियोजनमिति पात्रादित्वान्नपुंसकत्वम्। पथशब्दोऽकारान्तः। मार्गमतीतवान् अतिचक्राम तावत्सपत्नैरुदजृम्भ (म्भ्य) ताध्वनि बहुभिः शिष्यैः सह परशुरामेण मुख्येन च उदजृम्भ(म्भ्य)त प्रकटीभूतम्। इत्थं बहुवचनं सर्वेषां तदाज्ञाकारत्वात्॥ अथ **नलपक्षे**—ते इन्द्रादयः पदं स्वं ययुः क्षोणिपतिर्नलः निजां पुरीं निषधराजधानीं प्रति प्रतस्थे यावत्त्रियोजनं पथमतीतवान् तावत्सपत्नैः क्षत्रियैः स्वयंवरे तिरस्कृतैः अध्वनि बहुभिः समेत्य उदजृम्भ(म्भ्य)त प्रकटीभूतम्। त्रिपदं बहुलोपलक्षणं बोध्यम्। नलपक्षे स्वयंवरसमाजे तु इन्द्राणी भस्मीकरोतीति नायुध्यन्। नलस्त्वनैषीत्। प्राग्वद्वृत्तम्॥

खरोधकः कार्ष्णधनुर्विकृष्य खगेन सैन्यैरनुगम्यमानः।
सत्यापकः क्षत्रियजित्वरस्य संस्पृष्टपात्तेन गमं व्यतानीत् ॥ ३४ ॥

**रामपक्षे**—क्षत्रियजित्वरस्य कार्ष्णं धनुर्विकृष्यैकेन बाणेन तदीयखयानरोधकः सत्यापकः सत्यवचनकर्ता तेन परशुरामेण संस्पृष्टपात् स्पृष्टचरणः सन् गमं व्यतानीत् अकार्षीत्। सैन्यैरनुगम्यमानः त्रिःसप्तकृत्वः क्षत्रियजयशीलकुद्धो रामस्तं तर्जयामास। वैष्णवं धनुस्तद्धस्तादाच्छिद्य समारोप्य तदीयस्वर्गमार्गरोधको दाशरथिरेकेन बाणेनात्यद्भुतं कर्म यदाकरोत् तदा तच्चरणस्पृग्जामदग्न्यो जिहाय। एवं रामायणकथोत्तरालंकारेण व्यज्यते। सप्रतिज्ञं स्वर्गमार्गपरिघत्वं विधाय रामं मुमोच नान्यथेति ध्वन्यते। एतादृशकाव्यस्यैव काव्यप्रकाशे उत्तमकाव्यत्वं दर्शितम्। 'तत्प्रयोजको हेतुश्च' इति 'तृजकाभ्यां कर्तरि' इति निषेधस्यानित्यत्वदर्शनात् खरोधक इति समासः कृत इत्यवसेयम् ॥ अथ **नलपक्षे**—ये क्षत्रिया मार्गे नैषधेन संप्रहर्तुमागतास्तैरेव स नलः स्पृष्टचरणः सन् निषधपुरं प्रति गमं चचार। कथंभूतः। क्षत्रियजित्वरस्य सत्यापकः तेषां क्षत्रियाणां मध्ये कश्चन दिग्विजये सर्वेभ्यः श्रेष्ठः क्षत्रिय आसीत् तं बद्धा गृहीतचरणं तत्याज यदा शपथमकारयत्तेन। 'सत्यं शपथतथ्ययोः' इत्यमरः। धात्वर्थे णिजा पुक् च वार्तिकात्। खगेनेति 'जात्याख्यायाम्' इति सूत्रेण खगैरित्यर्थः। जातावेकवचनम्। जेयकृष्णदेवताकं कार्ष्णम्। 'सास्य देवता' इत्यण्। सैन्यैः सह महायुद्धं विधाय तपःसामर्थ्येन तान् जित्वा पुरं प्रति जगामेति भावः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ॥

लसत्पताकं नगरं प्रविश्य जैत्रो धनुष्मान्प्रणनाम मातॄः।
ज्येष्ठागुरूस्ता महनीयरूपां श्वश्र्वो विलोक्य प्रमदं परापन् ॥ ३५ ॥

**रामपक्षे**—लसत्पताकं नगरं प्रविश्य मातॄः प्रणनाम तिस्रः गुरूः श्वश्रूर्ज्येष्ठा सीता ववन्दे। तां महनीयरूपां ता विलोक्य प्रमदं हर्षं परापन् अलभन्त। 'गुरू गोष्पतिपित्राद्यौ' इत्यमरः। 'वोतो गुणवचनात्' इति ङीप्। गुर्वीः गुरूः रूपद्वयम्। तामिति सीतोपलक्षणम्। ऊर्मिलादयश्च तथाचक्रुः। अनन्तरं सर्वा दृष्ट्वा ननन्दुरिति भावः ॥ अथ **नलपक्षे**—स नलोऽपि तादृशं नगरं प्रविश्य मातॄः प्रणनाम। वीरसेनपत्न्योऽन्याः बह्वय आसन्निति द्योत्यते। ताः प्राग्वदेव तां दमयन्तीं दृष्ट्वा जहृषुरिति तात्पर्यार्थः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ॥

पुरस्थं परात्मानमाढ्यं गुणौघैः श्रिया सेव्यमानं कदाचित्प्रशान्तम्।
विभीताश्रयः सान्तरः ख्यातकीर्तिः कलिर्नाम सोऽभ्याययौ नारदाह्वः ॥३६॥

**रामपक्षे**—कदाचिन्नारदाह्वः कलिर्नाम पुरस्थं परात्मानमभ्याययौ। कथंभूतम्। गुणैराढ्यम्। पुनः कथंभूतम्। श्रिया सेव्यमानम्। पुनः कथंभूतम्। शान्तम्। कथं-

भूतो नारदः। विभीताश्रयः। पुनः कथंभूतः। सान्तरः। पुनः कथंभूतः। ख्यातकीर्तिः। नारद इत्याह्वा नाम यस्य स इति। 'स्त्रियाः पुंवत्' इति पुंवद्भावः (?)। नामेति प्रसिद्धावव्ययम्। अग्निर्माणवक इतिवत्साध्यवसाना लक्षणा बोध्या। साक्षात्कलिकारकत्वात्कलिरेव पुरि अयोध्यायां तिष्ठन्तं परात्मानं 'रामं विद्धि परं ब्रह्म' इत्यध्यात्मरामायणे। व्यापकं भगवन्तमभिमुखीकृत्य आययौ सौन्दर्यादिगुणसमूहपूर्णं श्रिया सीतया स्त्रिया सेव्यमानं प्रकर्षेण शमनिष्ठं विशेषेण संसाराद्भीता विभीता ध्रुवादयस्तेषां विधानुशासनेनाश्रयं शरण्यान्तरेण मेदेनान्यत्र कर्तव्येऽन्यवार्तांव्यवहारकत्वम्। मेदशिक्षासु हितमित्यर्थः। 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च॥' इत्यमरः। ख्याता प्रसिद्धा त्रिलोक्यां वार्ता यस्य सः॥ अथ **नलपक्षे**—इन्द्रादिदेवतिरस्कारात्कुपितः कलिस्तदानीं निषधपुरीमागत्य विभीतवृक्षाश्रयो भूत्वा अवकाशान्वेषी पुराणादिख्यातवार्तः कलिः साक्षान्निष्ठापरनामा स पुरस्थमुत्तमबुद्धिं प्रशान्तं नलमाक्रान्तवान्। अभ्याङ्पूर्वो यतिराक्रमणे। उपसर्गास्त्वर्थविशेषद्योतकाः। चरणप्रक्षालनाभावमात्ररन्ध्रान्वेषणात्। कथंभूतः। नारदाह्वः नराणां समूहो नारम्। 'दो अवखण्डने'। नारं द्यति खण्डयति इति नारदः, नारद इत्याह्वा यस्य सः। कलिवेशे सति पुण्यात्मापि दुर्बुद्धिर्भवति इत्यर्थः। भुजङ्गप्रयातं छन्दः॥

ततो वैष्णवीं भारतीं लोकनन्दां परानन्दथुं प्राप शृण्वन्नृमौलिः।
उदाराः समस्ताः समस्ताविषुस्तं पुरा वृत्तगुम्फैरुदन्तैः समस्तैः॥ २७॥

**रामपक्षे**—ततो नृमौलिः परानन्दथुं प्राप। नृणां मध्ये मौलिरिव। 'मौलिः किरीटे धम्मिल्ले कङ्केलिद्रुमचूडयोः' इति विश्वः। 'स्युरुत्तरपदे व्याघ्रः—' इति कोशः। एवं मौलिशब्दस्य श्रेष्ठार्थाभिधायित्वम्। रामस्ततो नारदात्परानन्दं प्राप। किं कुर्वन्। लोकानन्दां वैष्णवीं शृण्वन् श्रीमद्भगवद्गुणानुवादरूपामत एव लोकानन्दाम्। 'टुनदि समृद्धौ'। कर्मण्यण्। टाप्। 'ट्वितोऽथुच्'। 'स्यादानन्दथुरानन्दः—' इति त्रिकाण्ड्याम्। शृण्वन् सन् समस्ता उदाराः पुरावृत्तादिभिः तं समस्ताविषुरित्यन्वयः। 'उदारो दातृमहतोः' इति कोशः। 'इतिहासः पुरावृत्तम्' इति च। 'गुम्फ ग्रन्थे' तौदादिकः। भावे घञ्। इतिहासगुम्फितैरित्यर्थः। बहुव्रीहिसमासात्। सद्वृत्तस्यान्तो निश्चयो यत्र आध्यात्मिकज्ञानप्रकाशस्य नीत्यादेश्चेति भावः। तं रामम्। 'ष्टुञ् स्तुतौ'। लुङ् 'स्तुसुधूञ्भ्यः' इतीट्। सम्यग्वर्णयामासुः। सभायां कदा राजा रामः स्यादिति स्मार्षुः। वैष्णवीमिति। विष्णोरियम्। 'तस्येदम्' इत्यण्॥ अथ **नलपक्षे**—नृमौलिर्नलो राजा ततो विवाहोत्तरं मध्येसभं सुमतिजातूकर्ण्यबकदाल्भ्यादिभ्यो वैष्णवीं भारतीं शृण्वन् परानन्दथुं प्राप। कथंभूताम्। लोकानन्दाम्। उदारा इत्यादि च पूर्ववदेव विशेषणविशिष्टत्वं प्रतिपत्तव्यम्। भुजङ्गप्रयातं छन्दः॥

तदीयाधिराज्यं विहन्तुं तदानीं नृपानुज्ञया मन्थरा दुःप्रवृत्तिः ।
समुद्दूषिताप्यास वार्ता कलीया यतः पुष्कराक्षी प्रजज्वाल कोपात् ३८

**रामपक्षे**—तदा तदीयाधिराज्यं विहन्तुं नृपानुज्ञया मन्थरा दुःप्रवृत्तिरभूदिति शेषः । 'कर्मणि द्वितीया' इति सूत्रं व्याचक्षमाणो भाष्यकार आह—अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्तीति गम्यते । वृक्षः प्लक्षः अस्तीति गम्यते । नॄन् पान्तीति नृपाः लोकपाला इन्द्रादयस्तदनुज्ञया इन्द्रादिदेवै राज्यस्थे रामे राक्षसवधो न भविष्यतीति विचार्य नोदिता वाणी मन्थरा बुद्धा वा विवेशेति सा कैकेयीद्वारा विघ्नं करिष्यतीति प्रविष्टा वाक् सर्वं विपरीतं मन्थरामाविश्य चक्रे इति रामायणकथानुसंधेया । दुष्टा प्रवृत्तिर्वार्ता यस्याः सा तथाभूता मन्थराख्या कैकेयीपरिचारिकाभूत् । यतः कारणात् पुष्कराक्षी कैकेयी कोपाज्जज्वाल । अत एव समुद्दूषितापि पण्डितैर्निन्दितापि रामराज्याभिषेकविघ्नराजसंस्थादिदुर्वार्ता कलीया कलियुगीया त्रेतायुगे आस बभूवेत्यर्थे लिङ् प्रतिरूपकमव्ययम् । उत्तरालंकारेण कथानुसंधेया । 'पुष्करं पङ्कजे व्योम्नि द्वीपेऽम्भसि नपुंसकम्' इति हैमः ॥ अथ **नलपक्षे**—तदानीं नृपानुज्ञया तदीयाधिराज्यं विहन्तुं दूरीकर्तुं मन्थरा । 'मन्थ विलोडने' । 'मथि हिंसायां च' । मन्थनं मन्थः । मन्थं नाशं राति ददातीति मन्थरा । 'रा दाने' । दुःप्रवृत्तिः समुद्दूषितापि कलीया आस । नृपानुज्ञयेति पदेन कलियुगाविष्टः कदाप्यतथाचरितो नृपो नलः सभायां कितवराजमक्षैर्मया सह दीव्येत्यचूचुदत् । समुत्कर्षेण धर्मादिशास्त्रेषु दूषितापि सा वार्ता कलीया कलौ साध्वी कलहकारिणी । 'सर्वत्र अग्निकलिभ्यां ढक् वक्तव्यः' इति ढकोपवादत्वेन 'वा नामधेयस्य' इति वृद्धाच्छः शैषिकः । चण्डतरा बभूव । यतः कारणात् पुष्करश्चासावक्षी च पुष्कराक्षी । बहुलग्रहणात्पुष्करशब्दस्य पूर्वनिपातः । अक्षाः कूटत्वेनास्य सन्तीत्यक्षी । 'अत इनिठनौ' इति इनिर्मत्वर्थीयः । लिङ्गशेषः शब्दालंकारः । एवं च प्रजज्वालपदेन राज्यकोशादिकमपहृत्य नलीयं दुष्टदायादः पुष्करो राज्यश्रिया द्यूतजितयातीव चकाशे । नलो भ्रष्टश्रीको हृतराज्योऽभूदिति तिङ्पदव्यङ्ग्यम् । 'ज्वल दीप्तौ' भौवादिकः लिट् । 'अक्षास्तु देवनाः पाशकाश्च ते' इत्यमरः । सन्नपि तथा चकार अन्येषां का कथेति भावः । भुजङ्गप्रयातं छन्दः ॥

अयं सुतः स्याद्भरतो हि राज्ये बम्भ्रम्यमाणो विपिनेऽवसीदेत् ।
वधूसमेतो वरदानतः पुरा राजानमित्याह कनिष्ठमाता ॥ ३९ ॥

**रामपक्षे**—कनिष्ठमाता । रामस्येति शेषः । राजानं दशरथमित्याह—किमिति । भरतः सुतो राज्ये स्यात् । वधूसमेतो बम्भ्रम्यमाणोऽयमवसीदेत् । कुतः । वरदानतः कारणात् । आभ्यां वराभ्याम् । दैवासुरयुद्धेऽक्षकीलः पाततः । कैकेयी द्रागवरुह्य रथाद्यथास्थानस्थं कृतवती तदा वरद्वयं न्यासभूतं नृपदत्तं तत्रादधे । तद्द्वयमिदानीं ययाचे । एकेन भरताभिषेकः स्यात्, अपरेण ससीतो रामो दण्डकान् गच्छतु नो

चेन्मरिष्यामीति सा निर्बबन्ध । तदा सत्यपाशबद्धो राजा तथैवाकरोदिति व्यज्यते प्रबन्धरूपरामायणकथानुसंधानमित्यवसीयतां बुधैः ॥ अथ **नलपक्षे**—कनिष्ठमाता । 'कनिष्ठोऽतियुवाल्पयोः' इत्यमरः । कनिष्ठस्य तुच्छस्य लघुपदार्थस्य माता उच्चैर्वक्ता । 'माङ् माने शब्दे च' । जौहोत्यादिको धातुः । 'ण्वुल्तृचौ' इति कर्तरि तृचि कृते सौपरे प्रसूवाचिमातृशब्दवद्रूपं जायते । पुष्करः कितवो राजानं नलमाह—किमिति । हि अयं मल्लक्षणो जनः पुरा पूर्वकाले द्यूतकाले वरदानतः वरस्य श्रेष्ठस्य पणे राज्यदानाद्धेतोः राज्ये निषधराज्ये स्यात् । भरतः । 'अप्यथातिशयो भरः' । इत्यमरः । भरेणातिशयेन तस्यति व्यथते इति भरतः । 'तसु उपक्षये' । दैवादिको धातुः । ततः क्विप् । अधातोरित्युक्तेः 'अत्वसन्तस्य' इति दीर्घो न सौ परे । 'सुतः पार्थिवपुत्रयोः' इति तृतीये काण्डे ; तल्लक्षणः सुतो राजा दुःखी नितरां दमयन्ती-सहितो वने बम्भ्रम्यमाणोऽटन् अवसीदेत् । अद्यैव मम राज्यं लब्ध्वा वनं गच्छेति भावः । त्रिष्टुब्जगत्योरुपजातिः ॥

अक्षैर्निहीनत्वमवाप्नुवन् राट् सलक्ष्मणोऽगात्पितृसद्म तूर्णम् ।
साध्वीयुतस्तादृशवेषदर्शनाद्व्यलापि पौरैर्धिगितीरयद्भिः ॥ ४० ॥

**रामपक्षे**—सलक्ष्मणो राट् साध्वीयुतस्तूर्णं पितृसद्म अगात् । कथंभूतो रामः । अक्षैर्निहीनत्वमवाप्नुवन् । पौरैस्तादृशवेषदर्शनात् व्यलापि । कथंभूतैः पौरैः । धिगितीरयद्भिः । निर्बन्धेन सीतयानुयातः प्रणामाय दशरथमन्दिरमयासीत् शीघ्रमेव । 'अथाक्षमिन्द्रिये । ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे' इति तृतीयेऽमरोक्तिः । श्वो राजा भूत्वा व्यवहारान्नारदोक्तान् । व्यवहाराध्यायेऽष्टादश करिष्यतीति पूर्वदिने सर्वैरवधृतम्। अथ दण्डकगमनावधारणेन तैर्व्यवहारैर्वियोगमाप्नुवन् इति गूढोऽभिसंधिः । 'सती साध्वी पतिव्रता' इति कोशेऽभिसंधिः । विलपिः परिदेवने । 'विलापः परि-देवनम्' इत्यमरोक्तिः । तादृशवेषदर्शनात् चीरवल्कलधारणात् ॥ अथ **नलपक्षे**—लक्ष्मणः स राट् नलः । 'राजा राट् पार्थिवः' इत्यादिकोशः । साध्वीयुतः दमयन्त्या युतः तूर्णं द्राक् पितृसद्म । तस्मिन्दिने नगरान्ते श्मशानकुट्यां न्यवात्सीत् । 'श्मशानं स्यात्पितृवनम्' इत्यमरः । अगादगमत् । 'लक्ष्मीवांल्लक्ष्मणः श्रीलः' इति कोशे । सामुद्रिकरेखात्मकपद्मादिराजचिह्नसमेतः पाणिपादे पूतपूर्वगत्या वा अथ पौरैर्निषध-वास्तव्यैः पट्टचीरधारित्वदर्शनात् तादृशवेषदर्शनादित्यस्यार्थः । 'ईर क्षेपे' चौरादिकः । 'इतीरिते वचसि वचस्विना' इति माघात् । 'भव शरणमितीरयन्ति ये वै त्यज भट' इति विष्णुपुराणाच्च व्यक्तवागर्थत्वं निर्णीतमेव । ईरयद्भिः । कथयद्भिरित्यर्थः । त्रिष्टुब्-जगत्योरुपजातिः ॥

आर्योक्तितः को न चिराय यायाद्वनं न सत्यात्परमोऽस्ति धर्मः ।
मुनीन्बुधानित्यथ संकथय्य प्रणम्य विश्राण्य वसून्यगाद्वनम् ॥ ४१ ॥

**रामपक्षे**—कः पुरुषः आर्योक्तितः आर्यः पिता तद्वचनाद्वनं चिराय अतिशीघ्रं न यायात् न गच्छेत्पुत्रः । अपि तु यायादेव । सत्यात्परमो धर्मो न । अथ रामो बुधान् पण्डितान् मुनीन् संकथय्य संवादविषयीकृत्य प्रणम्य वसूनि हिरण्यादीनि विश्राण्य दत्त्वा वनमरण्यमगात् ॥ अथ **नलपक्षे**—'अभावे नह्यनो नापि' इत्यमरः । अ आर्यः इति पदच्छेदः । कृतसवर्णदीर्घकः सन् अनार्योक्तितः न यायात् । अपि तु गच्छेदेव । यतः सत्यात्परो धर्म एव न । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः । सत्यस्य धर्मैकचरणत्वात् । पणबन्धे मयोक्तत्वात् । शेषं पूर्ववत् । त्रिष्टुब्जगत्योरुपजातिः ॥

बहिः पुरं यँस्तमसा परिप्लुतोद्देशं व्यवालोकत चीरवासाः ।
व्यत्यक्रमीत्तत्र निशां समस्तां स्वास्तारयोग्योऽऽपि विधेर्नियोगात् ॥ ४२ ॥

**रामपक्षे** विवरणम्—चीरवासाः बहिः पुरं यन् तमसापरिप्लुतोद्देशं व्यवालोकत । तत्र स्वास्तारयोग्योऽपि विधेर्नियोगात् समस्तां निशां व्यत्यक्रमीत् । चीराणि वासांसि यस्य सः । 'अपपरि–' इति समासः । अत एव ज्ञापकाद्बहिर्योगे पञ्चमी । पुराद्बहिरित्यर्थः । यन् गच्छन् रामस्तमसानदीव्याप्तोद्देशं व्यवालोकत विशेषेण ददर्श । 'प्लुङ् गतौ' । परिपूर्वो व्याप्त्यर्थः । पर्यङ्कादिस्वापयोग्योऽपि भुवि तृणेषु तां रात्रिं व्यतिवाहयामास दैववशात् । वस्तुतस्तु आत्मेच्छानुसारी भगवान्नरलीलां कुर्वन्निति वेदान्तिसिद्धान्तः ॥ अथ **नलपक्षे**—चीरवासा नलः पुराद्बहिर्गच्छन् गाढान्धकारव्याप्तोद्देशं ददर्श । तत्र तमसेति व्यस्तं पदं ज्ञेयम् । तत्र श्मशानार्थस्तु पितृसद्मेत्यस्य । 'श्मशानं स्यात्पितृसद्म' इति कोशात् । श्मशान एव रात्रिं समस्तां व्यतिक्रान्तवान् । अतदर्होऽपि विधीच्छयान्वभूत् । 'स्तृञ् आच्छादने' । आस्तारेर्भावे घञ् स्वार्थिकात् । व्यत्यक्रमीदित्यत्र 'ह्म्यन्त' इति न वृद्धिः । प्राग्वद्वृत्तम् ॥

निषादराट् संवदनाधिगन्ता सलक्ष्मणस्तां रजनीं व्यतीत्य ।
उत्तीर्णकूलंकषकोऽतियत्नात्कुट्यां न्यवात्सीत्प्रमदासमेतः ॥ ४३ ॥

**रामपक्षे**—सलक्ष्मणः प्रमदासमेतः निषादराट् संवदनाधिगन्ताभूत् । 'अस्तिर्भवन्तीपरः' इति भाष्यं प्रागेवोक्तम् । निषादराट् गुहस्तत्रागत्य संवादमकरोत्तेन कृतसंवादो भक्त्या तां निशां व्यतीत्य प्रभात उत्तीर्णभागीरथीकः प्रयत्नाद्गुहानीतनावा पारेगङ्गं कुट्यां न्यवात्सीत् ॥ अथ **नलपक्षे**—कश्चिन्निषादानां श्रेष्ठः श्मशाने नलप्रियोऽवसत् तेन संवादं विधाय तां रात्रिं विनीय ततः कांचित्सरितमुत्तीर्य प्रयत्नात्कुत्रचिज्जीर्णसभामण्डपान्तिके तमचीकरदिति हार्दोऽभिप्रायः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ॥

सद्वापरं तु कलिना हृतवासाः सुन्दराङ्गोऽयम् ।
सहचैलखण्ड आटीद्वनाद्वनं कान्तयावियुतः ॥ ४४ ॥

**रामपक्षे**—कान्तया अवियुतः सहितः सद्वापरं ससंदेहं यथा स्यात्तथा कलिना कलिः कलहः कैकेयीकृतदुष्टकलहेन हृतवासा हृतवस्त्रश्चैलचीरसहितः सुन्दरदेहोऽयं रामो वनाद्वनं पूर्ववनं परित्यज्योत्तरवनमाटीत्। 'अट गतौ' लुङ्। बभ्राम। 'संदेहद्वापरौ' इत्यमरः। सीता सौधयोग्याङ्गना सकण्टके हिंस्रव्याघ्रवने कथं भयाज्जीविष्यतीति कथं च भ्रमिष्यतीति संदेहवान्। 'कलिस्त्रिष्ये च संग्रामे संख्याने कलहे मतः' इति हैमः। 'चैलं वसनमंशुकम्'। पेशलमूर्तिर्भगवानेव वनेषु परोपकाराय बभ्रामेति भावः॥ अथ **नलपक्षे**—द्वापराख्ययुगसध्रीचीनाधमकलियुगेन व्याप्तसुन्दरदेहोऽर्धचीरवस्त्रोऽधिरजनि पक्षिहृतवसनः शून्यसभामण्डपस्थच्छुरिकया शयानाया दमयन्त्या वस्त्रार्धं नग्नत्वाच्छित्त्वा क्रूरबुद्धिः कल्पावेशात्तां विहाय तद्वियुक्त एव वनाद्वनं बभ्राम। सा तत्रैव परिश्रान्तादृष्टपूर्वघोरभ्रमणक्लेशा(वना)न्यद्राक्षीदिति तात्पर्यार्थः॥

दावं संदह्यमानं चण्डरवं वह्निनैक्षिष्ट।
नागेशं च तदन्तस्त्रात्वा तद्दंशितो ऽव्यकृत।
अग्रिमसौन्दर्यदिशं श्रित्वावसनं ततोऽव्राजीत्॥ ४५॥

**रामपक्षे**—वह्निना दह्यमानं चण्डरवं दावमैक्षिष्ट। अरण्ये भ्रमन् चटचटायितशब्दं कुर्वाणं वनं ददर्श। वह्निना भयंकरेण। 'दवदावौ वनारण्यवह्नी' इत्यमरः। इह वनवाची। तदन्तस्तन्मध्ये नागेश लक्ष्मणमित एहीति मार्गान्तरे नीत्वा त्रात्वा रक्षित्वा तत्र दंशितस्तद्दंशितः। 'संनद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः' इत्यमरः। 'दशि दंशने' चौरादिको धातुः स्वार्थे णिच्। अग्रे निशाटो भवेदिति समनह्यत। तादृशस्थलेऽपि अव्यकृत इति च्छेदः। 'अभावे नह्यनो नापि' इत्यनिषेधेऽव्ययम्। न व्यकृत। विकारं न लेभे इत्यर्थः। 'अकर्मकाच्च' इति कृञस्तङ्। पूर्वरूपम्। अथ तृतीयार्धव्याख्या—'शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः' इति गाथाछन्दः। तद्व्याख्यानं पद्यानन्तरम्। ततोऽग्रिमसौन्दरी आवसनमदिशां श्रित्वा अव्राजीत्। ष्यञः षित्वात् 'षिद्गौरादिभ्यश्च' इति ङीप्। 'हलस्तद्धितस्य' इति यलोपः। 'अकारो वासुदेवः स्यात्'। 'वस स्नेहच्छापहरणेषु।' आसमन्तात्प्रीतिसहितं यथा स्यात्तथा महासुन्दरी सीतारामदिशामनुसृत्य सीता वनमैक्षिष्ट ददर्श। 'ईक्ष दर्शने'। 'व्रज गतौ'। 'वदव्रज–' इति वृद्धिः। अग्रिमा सौन्दरी यस्याः सा॥ अथ **नलपक्षे**—स नलोऽग्निना दह्यमानं चण्डरवं दावं वनमैक्षिष्ट ददर्श। 'ईक्ष दर्शने' लुङ्। तन्मध्ये नागानामीशं कर्कोटकं दह्यमानं भीतभीतं पाहीति वदन्तं त्रात्वा रक्षित्वा पुनरग्रे रक्षार्थं तद्दंशितस्तद्दष्टः सन्व्यकृत वैरूप्यं श्यामत्वं ह्रस्वत्वं च लेभे। अतिसुन्दरत्वात्कोऽपि सेवकं न करिष्यतीति सौन्दर्यं व्यपनीय ऋतुपर्णनगरे कंचित्कालं व्यपगमय्य पश्चादनेनावृताङ्गो वसनेन पूर्वरूपं प्राप्स्यसीति उपदिश्य वस्त्रं दत्त्वा विससर्जेति भारतकथानुसंधानं कृत्वा व्याख्यातव्यम्। अग्रिमसौन्दर्यदिशं श्रेष्ठसौन्दर्यदायकं वसनं तद्दत्तं श्रित्वा संगोप्य ततोऽयोध्यां प्रत्यव्राजीत्।

स नलो भूमिपतिः तेन दष्टोऽसौ हिताय शीघ्रमेव खर्वातिश्यामाङ्गोऽभूत् । तथाभूतं विकारं नलः प्रापत् । श्रित्वा स्कन्धे गुप्तं परिष्ठाप्येत्यर्थः ॥

आकालिकवैकृतवान्पुरः पुरं प्राप शौर्ययुतः ।
मतमार्तुपर्णमखिलत्राणकरं भारमास बहिः ॥ ४६ ॥

**रामपक्षे**—शौर्ययुतः आकालिकवैकृतवान् पुरोऽग्रे मतमिष्टमार्तुपर्णपुरं प्राप । 'अगारे नगरे पुरम्' इत्यमरः । कथंभूतम् । अखिलत्राणकरम् । पुनः कथंभूतम् । भारम् । तावद्बहिरास । रामो वाल्मीकेर्द्वारीत्यर्थः । आसमन्तात्कालयति गोत्रजनान् प्राणिमात्रं वा । 'कल विल क्षेपे' चुरादिः । इत्याकालि । तादृशश्चासौ कश्च आकालिको यमः । 'को ब्रह्मात्मानिलार्केषु शमने सर्वनाम्नि च' इति विश्वः । तस्मिन्नपि वैकृतवान् भगवान् । 'त उतपराक्रमन्त्यविगणय्य शिरो निर्ऋतेः' इति श्रीमद्भागवते वेदस्तुतौ । विकृतमेव वैकृतम् । प्रज्ञाद्यण् स्वार्थे मतुप् । युतः शौर्येण पराक्रमेण युतः । ऋतून् वसन्तादीन् पर्णयति हरितयति प्रकाशयति तपोबलेन युगपदपि पर्ण चुरादिः । ऋतुपर्णस्य कवेः । वाल्मीकेरिदम् । 'तस्येदम्' इत्यण् । कविरात्मनीनमित्यग्रे पद्येऽनुवादाद्वाल्मीकिर्लभ्यते । 'कविर्वाल्मीकिशुक्रयोः' इति हैमः । कथंभूतं पुरम् । अखिलत्राणकरं सर्वरक्षाकरम् । गोव्याघ्रादीनामपि प्रशान्तवैरत्वात् । पुनः कथंभूतम् । भारं कान्तिप्रदम् । अथ चित्रकूटवसताविति सांनिध्यतः पदस्य च । 'सांनिध्यतः सिद्धपदस्य वृद्धाः' इति शक्तिग्राहकत्वाच्छास्त्रेषु ॥ अथ **नलपक्षे**—'आकालिकडाद्यन्तवचने' इति व्याकरणे सूत्रम् । आशुनश्वर इत्यर्थः कृतः । यदैव वसनपरिधायी तदैव स्वरूपभागिति आकालिकवैकृत्यं स्वरूपस्य । आकालिकवैकृतवान् शौर्ययुतः । पूर्वं दिग्विजये पुरोऽग्रे आर्तुपर्णपुरमयोध्याख्यं प्राप । कथंभूतम् । अखिलत्राणकरं पुण्यश्लोकत्वादस्य । भाभी र इव । अग्नितेजसमित्यर्थः । 'रः पावके च तीक्ष्णे च राः स्मृतः स्वर्णवर्णयोः' इति विश्वः । प्राग्बहिरास द्वारात् अनाहूतः प्रविशति । उद्योगपर्वण्युक्तत्वाद्बहिरतिष्ठदानिवेदनात् । कश्चन शालिहोत्रपारीणो द्वारि तिष्ठत्यन्येन वार्तामावेदयांचक्रे इति भावः । राजान्तिककर्मकरोऽस्तीति ॥

द्वारि ध्रियते रामो दिदृक्षते सत्यपूतं त्वाम् ।
इत्युक्तः साकेतेट्परिचर्यायै पुनः सोऽभ्यैत् ॥ ४७ ॥

**रामपक्षे**—रामो दाशरथिर्द्वारि ध्रियते सत्यपूतं त्वां दिदृक्षते इत्युक्तः स वाल्मीकिः साकेतेट्परिचर्यायै बहिरभ्यैत् संमुखं प्राप । 'धृङ् अवस्थाने' । तिष्ठतीत्यर्थः । दिदृक्षते इति 'ज्ञाश्रुस्मृदृशाम्' इत्यात्मनेपदमवसीयताम् । 'साकेतः स्यादयोध्यायाम्' इति धरणिः । 'परिचर्या तु शुश्रूषा' इति त्रिकाण्ड्याम् । तादर्थ्ये चतुर्थी । वाल्मीकेः सत्यवादित्वात् ॥ अथ **नलपक्षे**—रामः सुन्दरो भूतपूर्वगत्या । यद्वा 'रामो नीलचारुसिते त्रिषु' इत्यमरः । एतर्हि रामो नीलः कृष्णवर्णः सर्पदष्टत्वात् । साकेतेट् ऋतुपर्णः

पृथक्पदच्छेदः । परिचर्यायै । शालिहोत्रपारावारीणत्वान्मुनिवदभ्यर्हणीयो भवति । अभिपूर्वादिणो लङ् । ऋतुपर्णः सत्यवादी पुराणप्रसिद्धः । तमार्जिहदित्यर्थः । अन्येन निवेदिते वृत्तश्रुते बहिरभ्यैत् । उपगीतिः ॥

एकं तं श्रद्धाय हरिकार्यगृहीततादृशाभं सः ।
कृतसंवित्कं बहुधा न्यवीवसत्तत्र हर्यर्थम् ॥ ४८ ॥

**रामपक्षे**—स कविः हरिकार्यगृहीततादृशाभमेकं तं बहुधा कृतसंवित्कं श्रद्धाय तत्र हर्यर्थं न्यवीवसदित्यन्वयः । 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतिः । 'एके मुख्यान्यकेवलाः' इति कोशः । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु' इति कोशः । हरेरिन्द्रस्य कार्याय गृहीततादृशाकारं गृहीतमर्त्यावतारं बहुधा कृतसंभाषणम् । 'स्त्री संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु' इत्यमरोक्तिः । 'शेषाद्विभाषा' इति कप् । कृतसंवित्कमस्य व्याख्यानम् । श्रद्धाय अतीवादृत्य तत्र तार्णगृहे शिष्यरचिते हर्यर्थं हरिर्यमः तदर्थं तन्निवृत्तये । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इति थान्तेऽमरोक्तिः । मृतिं तरेयं श्रीरामदर्शनादिति तत्त्वज्ञः स्वकथासंवादपूर्वकमीश्वरं वासयामास । 'वस निवासे' हेतुमण्णिच् लुङ् । 'श्रदन्तरोरुपसर्गवद्वृत्तिः' इति ल्यप् ॥ अथ **नलपक्षे**—स ऋतुपर्णः एकं साक्षाच्छालिहोत्रमुनिमिवाश्वविद्यायामश्वकार्याय गृहीततादृशबाहुकरूपं बहुधा कृतसंभाषणं नलसारथिरवर्तिषीत्यादि ब्रुवाणमादृत्य सर्वाश्वपालाध्यक्षं कृत्वा हर्यर्थं तुरगार्थं तत्र निवासयामास । कोशस्तु प्रागेवोक्तः । आर्याछन्दः ॥

अथ चित्रकूटवसतौ रेमे रामोऽभिरामगतिः ।
कविमात्मनीनमभयं शिश्राय कथाभिरुत्तमाभिस्तम् ॥ ४९ ॥

**रामपक्षे**—अथाभिरामगतिः स रामः चित्रकूटवसतौ रेमे । तु पुनरात्मनीनमभयं कविमुत्तमाभिः कथाभिः शिश्राय । चित्रकूटाख्यः पर्वतः । 'वसती रात्रिवेश्मनोः' इति मेदिनी । अभिरामा मुक्तिरूपा गतिर्यस्मात् । 'कविः काव्यकरे शूरौ कविर्वाल्मीकिशुक्रयोः' इति वैजयन्ती । 'आत्माध्वानौ खे' इति प्रकृतिभावान्न टिलोपः । अभयम् । रामोपासकत्वात् । उत्तमकथाः अध्यात्मविद्यया विचित्रोपनिषद्धर्माः । 'श्रिञ् सेवायाम्' लिट् ॥ अथ **नलपक्षे**—अथानन्तरं रामः श्यामो बाहुकश्चित्रकूटवसतौ चित्रकूटा इव गिरिशिखराणीव वसतयो गृहा यस्मिन्निगमेऽयोध्याख्ये रेमे व्यलासीत् । कथंभूतः । अभिरामगतिः प्रशस्तानां नृणां गतिः शरणं तन्निगमे यः कविः सूरिरासीत् तमेवात्मनीनमात्महितं तथानघं निष्पापं विचार्य कथाभिरुत्तमाभिर्हरिकीर्तनगर्भाभिः शिश्राय पर्यषेविष्ट । वैष्णवसङ्गात्तत्रापि न व्यरंसीदिति भावः । तं प्रसिद्धकविमेव । 'प्रक्रान्तप्रसिद्धानुभूतार्थस्तच्छब्दो यच्छब्दोपादानं नापेक्षते' इति काव्यप्रकाशे राद्धान्तः ॥

सौधायिततार्णगृहो मृग्यमृगोयुक्तयोषाकः ।
अवरजनिव्यतिकीर्णः कंचिद्दिष्टं व्यतीयाय ॥ ५० ॥

**रामपक्षे**—सौधायिततार्णगृहः मृग्यमृगः युक्तयोषाकः अवरजनिव्यतिकीर्णः । राम इत्यनुवर्तते । कंचित् दिष्टम् । 'कालो दिष्टोऽप्यनेहापि' । दिष्टं कालं व्यतीथाय । सौध इवाचरितं तृणरचितं गृहं यस्य सः । 'तस्येदम्' इत्यण् । सौधशब्दादाचारक्यङन्तान्निष्ठा-कर्तरि । युक्ता योषा यस्य सः । 'शेषाद्विभाषा' इति कप् । अवरा जनिर्यस्य सोऽनुजो लक्ष्मणः तेन सहितः । 'संपर्के च व्यतिकरः प्रकारव्रातयोरपि' इति हैमः । व्यतिपूर्वः किरतिरेष्वर्थेषु वर्तते । मृग्या अन्वेषणीया मृगा यस्य सः क्षात्रधर्मत्वात् ॥ अथ **नलपक्षे**—अयुक्तयोषाक इति पूर्वरूपेणाकारश्लेषः । दमयन्तीरहितः अवरजनिभिरश्वपालैर्बहुभिः सहित इत्यर्थः । शूद्रादयोऽप्यश्वीया भवन्तीत्यर्थः । शेषं प्राग्वत् । उपगीतिर्वृत्तम् ॥

स्वर्यातवृद्धभूपा गतरामा यातलक्ष्मणा सा पूः ।

श्रितभरता विलपन्ती बभ्राजे तर्हि नो नूनम् ॥ ५१ ॥

**रामपक्षे**—स्वर्यातो वृद्धो दशरथभूपो यस्याः सा गतरामा यातलक्ष्मणा, श्रितभरता विलपन्ती सा पूरयोध्या न बभ्राजे नूनं निश्चयेनेत्यर्थः । मातुलगृहात् शीघ्रायातभरतापि ॥ **नलपक्षे**—सा निषधपुरी स्वर्गतवीरसेना गतरामः । रामः पूर्वं सुन्दरत्वान्नलस्यावधार्यः । प्रोषितनला निर्गतलक्ष्मणा निर्गतश्रीमज्जना श्रितभरता पुष्करप्रियत्वान्नटा एव बहुलास्तत्राभूवन्निति भावः । 'भरता इत्यपि नटाश्चारणास्तु कुशीलवाः' इत्यमरः । विलपन्ती नलमेव पुण्यश्लोकं शोचन्ती तर्हि तदा प्रोषिते नले नाभ्राजिष्टेत्यर्थः । नूनम् । आर्याछन्दः ॥

श्यामाङ्गं हरिमित्रं कविराडुदचीचरज्जातु ।

द्विजको वरवर्णोऽहं प्रतिरोधि तथाटमाखेटी ॥ ५२ ॥

**रामपक्षे**—जातु कदाचित् वाल्मीकिः कविराट् श्यामाङ्गं मेघश्यामं रामं हरेरिन्द्रस्य मित्रं तत्कार्यार्थावतारत्वात् स्वां कथमिति शेषः । उदचीचरत् उवाच । अहं द्विजकः । कुत्सायां कन् । शूद्राचारो द्विजोऽहं पुरा आखेटी मृगयातत्परः प्रतिरोधितया चौर्यवृत्त्या । 'प्रतिरोधिपरास्कन्दि' इत्यमरः । आटमभ्रमिषम् । 'आखेटो मृगया स्त्रियाम्' इति कोशः । अत इनिर्मत्वर्थीयः । प्रतिरोधीति ताच्छील्ये णिनिः । व्याधकर्मेति प्राग्जन्मवृत्तवर्णनम् ॥ अथ **नलपक्षे**—कविराट् बुधश्रेष्ठ ऋतुपर्णः जातु हरिमित्रमश्वमित्रं बाहुकं स्वां कथामुदचीचरत् । द्विजैरनुकम्पितो द्विजकः वरवर्णः महायशाः अहं जात्वेव न तु सर्वदा आखेटी मृगयार्थमाटम् । अस्य पार्श्वचरः प्रतिरोधित्वेन मृगाणां व्याध इव । उपगीतिः ॥

सप्तर्षींस्तेजोभिः प्रकाशमानान्समद्राक्षम् ।

दर्शनलब्धविबोधो रामाख्यां प्रोज्झपन्नस्थाम् ॥ ५३ ॥

**रामपक्षे**—हे राम, तेजोभिः प्रकाशमानान् सप्तर्षीन् । 'समासेऽण्ययं प्रकृतिभावः' इत्युक्तम् । समद्राक्षं दृष्टवान् । दृशेर्लुङ् । दर्शनानन्तरमेव लब्धबोधोऽहं रामे-

तिवर्णद्वयं प्रोज्जपन्। वृषलतुल्यत्वाद्युत्क्रमोपदिष्टं जपन्। प्रोद्यक्ष्यमिदम् (?)। तत्रै-वातिष्ठम्। 'गातिस्था-' इति सिचो लुक्। अस्थादिति॥ **नलपक्षे**—मृगयार्थं वने धावंस्तानेवापश्यं सप्त ऋषीन्। दर्शनलब्धबोधोऽहमपि रामेति परब्रह्माख्यां प्रकर्षेण जपन्नस्थाम्। उपगीतिवृत्तम्॥

चलितोऽपि दूरदूरं हरिशरणोऽन्तर्दधुस्ते च।
भुवनेशगुहां चित्रां तत्राहं तन्महोऽपश्यम्॥ ५४॥

**रामपक्षे**—च पुनस्तेऽन्तर्दधुः। हरिशरणोऽहं दूरदूरं चलितोऽपि भ्रष्टसमाधी भवन्नपि दृढं तन्मुकुन्दशरणत्वात् चित्रां भुवनेशगुहां भुवनेशः साक्षी चिदात्मा तद्गुहा हृदयगुहा। 'गुहां प्रविष्टावात्मानौ-' इति व्याससूत्रात्। तत्रानिर्वचनीयं तन्महो ज्योतीरूपमपश्यं भगवन्तमिति तात्पर्यार्थः॥ **नलपक्षे**—ऋतुपर्णोक्तिः। च तेऽन्त-र्दधुः। हरिशरणोऽहं दूराद्दूरं चलितः अपि पुनः शरयूरामयोर्मध्ये भुवनेश्वरशिवगुहां पाताले वर्तमानां कूर्माचले चित्रामद्भुतां स्मरस्मेरसुधामाख्याप्रथितां दुरन्तां तत्र मूर्ति-त्रयात्मकं तेजोलक्षणं भुवनेश्वरमद्राक्षम्। दशदिग्गमनं ततो भवतीति कूर्माचलेऽस्तीति स्कन्दपुराणान्तर्गतभुवनेशानमाहात्म्यमवलोक्य बुधैः प्रतिपत्तव्यम्॥

आव्रज्य चिरात्तेऽमी नाकुं पुपुवुर्दयार्द्रा माम्।
ऋतुपर्णं कविमुक्त्वा स्वैरव्रज्या व्यचारिषुर्जोषम्॥ ५५॥

**रामपक्षे**—तेऽमी ऋषयश्चिराद्बहुवर्षान्ते आव्रज्य आगत्य नाकुं वल्मीकभूमिं पुपुवुः पवित्रीचक्रुः स्पर्शादिभिः। कथंभूताः। दयार्द्राः ऋतुपर्णं कविं प्रोच्य स्वैर-व्रज्याः स्वच्छन्दगा जोषं व्यचारिषुः। 'वामलूरश्च नाकुश्च' इति। कोशः। 'मन्दस्वच्छ-न्दयोः स्वैरः' इति च। 'व्रज्याटाट्या पर्यटनम्' इति। स्वैरं व्रज्यं गमनं येषां ते इति बहुव्रीहिः। 'तूष्णीमर्थे सुखे जोषम्' इति तृतीये। ऋतूनां सर्वेषां पर्णत्वं हरितीभावः। सार्वकालिकत्वं यत्प्रभावादेतादृशं कविमादिकविशब्दभाजं मामभिधायेत्यभिप्रायः। अतःपरं वाल्मीकिः कविराट् परमर्षिर्भविष्यसीति वरं ददुः॥ अथ **नलपक्षे**—तेऽमी ऋषयश्चिराद्विलम्बेन आव्रज्य आगत्य आ समन्तात्कुः पापं यस्य स आकुः। 'पापकु-त्सेषदर्थे कुः' इत्यमरः। 'अत्युच्चैः सौ' इतिवत्कृते बहुव्रीहौ जायन्ते। तमीदृशं मां दयार्द्रा न पुपुवुरिति न, पुपुवुरेव। काकुः कविं पण्डितमृतुपर्णं मामभिधाय जोषं स्वैर-चारिणो व्यचारिषुः। बाहुकं प्रति ऋतुपर्णोक्तिरियम्। अद्भुतभुवनेशाख्यशंकरदर्शनात्त्व-मुत्तमश्लोको राजर्षिर्भविष्यसि पण्डितोऽपि भवितेति प्रसादं चक्रुः॥

श्यामाङ्गो हरिमित्रं विसिष्मिये तां कथां श्रुत्वा।
अथ भरतः परिकरवान्स्थलीमयोध्यां सतीर्थोऽगात्॥ ५६॥

**रामपक्षे**—श्यामाङ्गो हरिमित्रं तां कथां श्रुत्वा विसिष्मिये। अथ सतीर्थः परि-करवान् भरतः अयोध्यां स्थलीमगात्। मेघश्यामाङ्गत्वाद्रामस्य श्यामाङ्ग इति नाम।

हरेरिन्द्रस्य मित्रं विसिष्मिये । 'ष्मिङ् ईषद्धसने' । आश्चर्ययुक्तोऽभूत् । मानुषचेष्टां दर्शयन् अनन्तरं मातरं संतर्ज्य कृतपश्चिमक्रतुः पुरोधसा समं तीर्थशब्देन पुरोधा वसिष्ठः परिवारेण समस्तेन सहितः ससैन्यः श्रीरामपदभाक् पादचारेण । अयमेवो-त्कर्षेण ध्यायन्तीति अयोध्या मुनयः । 'अयः शुभावहो विधिः' इत्यमरः । 'आतोऽनु-पसर्गे कः' । अर्श आद्यच् । अयोध्यावन्ती । 'मतौ बह्वचः' इति दीर्घः । अगात् जगाम । स्थलीं चित्रकूटस्थलीम् ॥ अथ **नलपक्षे**—हरेरश्वजातेर्मित्रम् । श्यामाङ्गो बाहुकस्तां कथां ऋतुपर्णाच्छ्रुत्वा विसिष्मिये । अनन्तरमेव कश्चिन्नटराजो भरतः सपरिकर उपयोगिकलत्रादिना युक्तः । 'भरता इत्यपि नटाः' इत्यमरः । सोपाध्यायः परमैन्द्रजालिकः सर्वत्र लब्धप्रतिष्ठाकः अयोध्यां स्थलीं पुरीं वा अगात् । 'स्वर्णेऽपि राः परिकरः पर्यङ्कपरिवारयोः' । 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु' इति विश्वः । मूलविभुजादित्वादात इति ध्यायतेः कः । उपगीतिः ॥

भरतः प्रणीतपूजो मध्येमार्गं स्थलान्तरे विरजन् ।
पूर्वास्पदं हरिपदं हित्वा तृणयन्सकोटीरः ॥ ५७ ॥

मध्येमार्गं भरद्वाजादिभिः प्रणीतपूजो भरतः स्थलेऽन्यत्र विरजन् विरक्त आसीदि-त्यर्थः । 'अस्तिर्भवन्तीपरः' इति भाष्यं प्रागेव दर्शितम् । तत एवाध्याहार्यम् । हरि-पदं हित्वा पूर्वासदं तृणयन् सकोटीर आसीत् । यत्र रामेण निकेतः कृतस्तत्पदं हित्वा अन्यत्र वासं तृणीकुर्वन् सकोटीरो जटाजूटभाक् आसीत् । 'कोटीरो मुकुटे प्रोक्तः कोटीरः स्याज्जटासटे' इति रभसकोशः । तृणशब्दाद्धात्वर्थे णिच् ॥ अथ **नलपक्षे**—भरतो नटः स मध्येमार्गम् । अव्ययीभावः । 'पारेमध्ये–' इति निपातनादेत्वम् । अन्यैः पूजितोऽपि पूर्वेषां पूर्वेषां पूर्ववंश्यानामास्पदं स्थानं विहाय इन्द्रप्रस्थापितं पदा-न्तरं तृणयन् कोटिप्रदं तमृतुपर्णं मत्वा तमेवाभ्यधावत् । भरतप्रोक्तं नटसूत्र-मधीत इति भरतः । 'प्रोक्ताल्लुक्' इति अणो लुक् । 'भरता इत्यपि नटाः' इत्यमरः । उपगीतिवृत्तम् ॥

श्यामाङ्गं गुणवत्त्वात्प्राणंसीद्धर्षकण्टकितः ।
आयोध्योऽपि ददर्श प्रभुं तमुच्चैर्गुणं भरतम् ॥ ५८ ॥

**रामपक्षे**—हर्षकण्टकितः स इत्यनुवर्तते । गुणवत्त्वात् मेघवर्णत्वात् श्यामाङ्गं रामं प्राणंसीत् । आयोध्यः प्रभुरपि । अयोध्याया राजा आयोध्यः । रामोऽपि उच्चैर्गुणं भरतं ददर्श । 'रोमाञ्चनं कण्टकितसमम्' इति मेदिनी । तारकादित्वादितच् । कथं-भूतः । हर्षेण सरोमाञ्चः । रामदर्शनजन्यहर्षेण रोमाञ्चितः सात्त्विकत्वात् । पितृदत्तराज्यं त्यक्त्वा तं प्रभुमेव शरणं चकार । यतः—'णम प्रह्वत्वे शब्दे च' । लुङ् । उच्चैर्गुणमिति परिकरालंकारोऽयम् ॥ अथ **नलपक्षे**—हर्षकण्टकितः स भरतो नटः श्यामाङ्गं बाहु-कम् अधिकगुणवत्तादर्शनाद्ववन्दे । तदनु अयोध्याया राजा ऋतुपर्णोऽपि उच्चैर्गुणं

नटराजं तं भरतं ददर्श अद्राक्षीत् । वासादिकं दत्त्वा कृपया यशोऽर्थम् । आर्यावृत्तम् ॥

करुणं रसं प्रकटयन्भरतः सर्वान्व्यमूमुहत्तत्र ।
स्वर्याततातवृत्तं प्रथयन्नस्थात्सहानुजः श्रमणि ॥ ५९ ॥

**रामपक्षे**—तत्र भरतः करुणं रसं प्रकटयन् विलपितं तातमुद्दिश्य कुर्वन् सर्वान्मुनिसहितान् व्यमूमुहत् मोहयामास । कथंभूतः सः । स्वर्याततातवृत्तं प्रथयन् । कथंभूतं वृत्तम् । श्रमणि श्रमणककथायुक्तम् । शीघ्रं राजा मृतोऽभूत् इत्थंभूतः सहानुजोऽस्थात् । हा हेति आर्तनादभाक्करुणरसं व्यञ्जयन् लक्ष्मणादीन् मोहयांबभूव । स्वर्गतदशरथचरितमेव ख्यापयंस्तत्र तस्थौ ॥ अथ **नलपक्षे**—नवरसां करुणं रसं प्रकटयन् तत्र सभायां सर्वान्मोहितवान् । स्वर्याततुंपर्णतातस्य चरितं विस्तारयन् तद्रूपानुसंधानेन स्वभ्रातृयुक् बहुव्यञ्जितलीलादर्शनश्रमणं यथा स्यात्तथाऽस्थात् । स्वर्यातेत्यत्र ऋतुपर्णस्येति शेषः । गीतिवृत्तम् ॥

बाष्पायमाणकण्ठो रामो राजाधिराजोऽसौ ।
ववृते तदा बहुतपास्तस्मै राज्यं समर्पयामास ॥ ६० ॥

**रामपक्षे**—असौ रामस्तदा बाष्पायमाणः । आर्योश्च (?) 'बाष्पोष्मभ्यामुद्वमने' इति क्यङ् बाष्पमुद्वमतीत्यर्थे । ववृते बभूव । बहुतपाः । 'तपस्तपसि संतापे' इति हैमः । 'तप संतापे' । 'सर्वधातुभ्योऽसुन्' । बहुसंताप इत्यर्थः । तस्मै भरताय अयोध्याराज्यं त्वमेव शाधि अहं नायामीति पितृदत्तत्वात्तुभ्यं तावत्कथयित्वा समर्पयामास । तत्प्रेम्णातुषत्तुतोष ॥ अथ **नलपक्षे**—राजाधिराजोऽसौ नल एव संप्रति नीलरूपत्वाद्रामः । 'रामो नीलचारुसिते त्रिषु' इति कोशः प्रागुक्तः । 'नानार्थे तात्पर्याद्विशेषावगतिः' इति भाष्यादत्र नीलार्थे तात्पर्यम् । [सर्व]दत्वान्नलस्य नीलत्वं तादृग्बहुगुणं दृष्ट्वा नटं परसेवकत्वाद्भ्रष्टराज्यत्वात् । 'रा दाने' । घञर्थे कविधानम् । राणं रः रस्य ऋतुपर्णदानस्य आज्यं घृतं बहुलं घृतं समर्पयामास । ददावित्यर्थः । वीरसेनदमयन्त्यादिस्वरूपदर्शनात्तादवस्थ्याज्ञाप्रारम्भे इति भावः । 'घृतमाज्यं हविः सर्पिः' इति कोशः । उद्गीतिवृत्तम् ॥

स तु पादुकापुरस्कृन्नन्दिग्रामे तदीयभक्तियुतः ।
आदेशकारिजनतापुरस्कृतस्तीर्थभाग्रेमे ॥ ६१ ॥

**रामपक्षे**—स तु नन्दिग्रामे रेमे । कथंभूतः । पादुकापुरस्कृत् तदीयभक्तियुतः आदेशकारिजनतापुरस्कृतः । तीर्थभाक् । पादुकां पुरस्करोतीति उपपदसमासः । 'क्विब्वा' इति क्विप् । तीर्थशब्देन गुरुः रामपादुकां पुरस्कृत्य भक्तियुतस्तदीयशब्देन पादुकापरामर्शः । त्यदादीनां पूर्वपरामर्शकत्वात् 'पुरस्कृतः पूजितः स्यात्' इति हैमः । आदेश आज्ञा तत्कारिणी या जनता तया पूजितः राज्यं भवतामेव भवद्दासोऽहं यावदागमं पुरमविशन्नेव पादुकाकिंकरो भवदाज्ञया शासिष्यामि राज्यमिति निगद्य निवर्त्य नन्दिग्रामे वसन् रा-

ज्यमशिषद्भरत इति भावः ॥ अथ **नलपक्षे**—तु पुनः स नलो द्वितीयपक्षे तस्यैव प्रक्रान्तत्वात्स इति नलः परामृश्यते । तु पुनः स नलः ऋतुपर्णपादुकापुरस्कृत् प्रतिदिनं प्रणामकारी बाहुकरूपत्वात् । नन्दिग्रामे नन्दिनो हर्षका ग्रामा यन्नगरस्याभितः सन्ति तादृशे इति बहुव्रीहिः । तत्र वसन् । 'टुनदि समृद्धौ' णिनिः । अत इनिर्वा । रेमे व्यलासीत् । कथंभूतः आदेशकारिजनतापुरस्कृतः सर्वेऽश्वपालास्तदीयास्तदीयकिंकरा राजादेशादभूवन् । यतः तीर्थभाक् सरय्वादिस्नायी । आर्यावृत्तम् ॥

अथ कासारे नलिनी विनायकेन व्यदर्शि तदा ।
अवलम्बितजाग्रत्ता प्रत्यूषे घूर्णमानतनुः ॥ ६२ ॥

अथ भरतविसर्जनोत्तरं चित्रकूटपर्वतैकदेशे स्नातुं गतेन रामेण कासारः कश्चित्पद्मिनीमण्डितोऽदर्शि । वेः पक्षिणो गरुडस्य नायकः श्रीशस्तेन रामेण । 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि' इति विश्वः । तत्र कासारे तडागे काचिन्नलिनी कमलिनी नलमस्यास्तीति नलिनी व्यदर्शि दृष्टा । दृशेश्चिण् । कथंभूता । अवलम्बितजाग्रत्ता । 'कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेन' इति सिद्धान्तः । प्रत्यूषे प्रातःकाले । अवलम्बिता आश्रिता जाग्रत्ता विकासो यया सा । रात्रौ पद्मानां संकोचात् । पुनः कथंभूतः । घूर्णमानतनुः 'घुण घूर्ण भ्रमणे' । वायुवशाद्भ्रमन्ती मूर्तिर्यस्याः सा । एतामेव पुनर्वर्णयिष्यति कविर्नलपक्षे ॥ अथ **नलपक्षे**—यदा नलो विहाय जायां गतोऽभूत् ततः कावस्था दमयन्त्या अभूदित्याह—यत्र जीर्णसभामध्ये नलः शिश्ये । तया सह तत्र विदूरे कासार आसीत् । कासार इति सप्तमी गङ्गायां घोष इतिवत् । उक्तं हि भाष्ये—साधकतमसूत्रे व्यर्थीभूतेन तमब्ग्रहणेनेदं ज्ञापितम् । 'कारकाधिकारे गौणमुख्यन्यायो न प्रवर्तते' इति परिभाषा । गङ्गायां गावः । कूपे गर्गकुलं तेनेत्यादिप्रयोगाः सिद्धाः । कस्यानन्दस्यासार आगमो यस्मादिति यौगिकोऽयं कासारशब्दः । विनायकेन केनचित्कलिविधिकरेण पक्षिश्रेष्ठरूपधारिणा हृतनलचीरवरेण सरसि तन्निकटे तस्मिन्काले नलिनी नलः पतित्वेनास्या अस्तीति । अत इनिर्मत्वर्थीयः । 'ऋन्नेभ्यः' इति ङीप् । नलपत्नी । दमयन्तीत्यर्थः । व्यदर्शि दृष्टा । नलगमनानन्तरं प्रातः प्रबुद्धा । कथंभूता । अवलम्बितजाग्रत्ता इत्यादिविशेषणानि प्राग्वत् । पतिदर्शनाभावात् घूर्णमानमूर्तिः । भ्रमचित्तत्वेन व्याकुला 'कां दिशं यामि हा विधे किं करोमी'ति वचनात् । कलिदूतस्तु दमयन्त्यो-(दंपत्यो)र्वियोगदुःखं दृष्ट्वा जहर्षेति भावः । उपगीतिवृत्तम् ॥

वनजातकान्तिपूरादूरपतित्वात्सबाष्पजला ।
शबरकरानभिमृष्टा साक्षान्मन्दाकिनी यस्मात् ॥ ६३ ॥

**रामपक्षे**—त्रिभिर्विशेषकमिदं बोध्यम् । पुनः कथंभूता । वने जले । 'जीवनं भुवनं वनम्' इति कोशः । जातः कान्तिपूरो यस्याः सा । 'पूरश्चुरप्रचुरकाश्च' इति त्रिकाण्ड्याम् । अदूरपतिसूर्यत्वात् । 'बाष्पमश्रु च' इति कोशः । प्रातर्नदीतडागादौ

बाष्पोद्गमो भवति । नीहारवत् ततोऽम्बुकणाः परिस्रवन्ति । तत्र कविरुत्प्रेक्षते—खण्डिता नायिकेव पद्मिनी स्त्री रुरोद सबाष्पजला मन्ये । पुनः कथंभूता । शबरकरानभिमृष्टा शबरकरेण किरातादिहस्तेन वृषलादिवारणान्मुनिभिर्मन्दाकिनीजलत्वादनभिमृष्टा अस्पृष्टा । तमेवार्थं द्रढयति—यतः साक्षान्मन्दाकिनी तत्समीपस्थानां तत्प्रभावत्वात् सरस्यादीनाम् । अतो नीचस्पर्शरहिता ॥ अथ **नलपक्षे**—कथंभूता सा दमयन्ती । 'क्षै जै षै क्षये' धातुः । जनेर्जायतेश्च क्ते तुल्यं जात इति रूपं भवति । वने जातः क्षीणः कान्तिपूरो यस्याः सा क्लेशाधिक्यात् सबाष्पजला अश्रुवर्षवर्षिणी दूरपतित्वात् । 'मैन्दाः किरातशबरपुलिन्दा म्लेच्छजातयः' इत्यमरः । भ्रमन्ती वने शबरं कामुकं दृष्ट्वा भस्मीचकार पातिव्रत्येन शापात्तस्याः न तु तत्स्पृष्टासीत् । तत्र हेतुमाह—साक्षाद्गौरीव सतीव मन्देषु मूढबुद्धिषु आकिनी । 'अक अग कुटिलायां गतौ' 'सुप्यजातौ' इति णिनिः । कुटिलगामिनी । 'दुष्टेषु मायाचारो मायया वर्तनीयः' इत्युद्योगे विदुरवाक्यं परो धर्मः । एवं शबरकरेणास्पृष्टैवाभिप्रायचेष्टादर्शनादेव चचण्डे । उपगीतिः ॥

अजगरगुप्तिपरोऽपि प्रियभक्तेः खण्डकोऽपि विधुः ।
स नलिन्या विधुरासीच्छेषितभूतिः क्षणे तस्मिन् ॥ ६४ ॥

अजगरगुप्तिपरोऽपि अपि पुनः प्रियभक्तेः खण्डकोऽपि विधू राक्षस इव बभूव । नलिन्यास्तस्मिन् क्षणे शेषितभूतिरासीत् । 'अजा विष्णुहरच्छागाः' इत्यमरः । 'गॄ शब्दे' । गरणं गरः । 'ऋदोरप्' । गोपनं गुप्तिः । गरश्च गुप्तिश्च गरगुप्ती अजस्य शिवस्य वर्णनरक्षणपरोऽपि कालकूटदाहशमकत्वाद्गुप्तिपरोऽपि प्रियस्य रवेर्भक्तेः खण्डकः । 'खडि खण्डने' । रात्रिकरत्वात्संकोचकरत्वात् । 'विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे' इति हैमः । राजा चन्द्रोऽपि । स प्रत्यूषे तु धूसरकान्तित्वात् शेषिता कलावशेषा भूतिः संपत्तिर्यस्य स शेषितभूतिः शङ्के नलिन्याः शापादिव तीक्ष्णकान्तिरासीदिति व्यज्यते । 'शिष असर्वोपयोगे' । इतरनिवृत्तिपूर्वकावस्थानं शेषपदार्थः । एवं नलिन्याः पद्मिन्या राक्षस इवासीद्धूसर इति फलितोऽर्थः ॥ अथ **नलपक्षे**—भ्रमन्त्या वने दमयन्त्या अजगरग्रस्ताया असिना तं हत्वा रक्षापरोऽपि तत्कर्षणाह्लादकत्वाद्विधुरपि व्यभिचारचित्तत्वात् नलखण्डकत्वात्तस्य नलिन्या विधुरिव राक्षस इव क्रुद्धया तया पत्येत्युक्तत्वाद्भस्मावशेषीभूतः तत्र क्षणे शेषितभूतिरित्यासीत् । काव्यलिङ्गरूपकालंकारयोः संसृष्टिः । एतेन दमयन्त्याः पातिव्रत्यमाहात्म्यं ध्वन्यते । उपगीतिवृत्तम् ॥

मुनिमण्डलान्तरगता जाताह्लादा चिरेण पुनः ।
कृतसौहित्या रुचिरा क्षणेन नष्टं तदादर्शत् ॥ ६५ ॥

**रामपक्षे**—प्रातर्मुनिमण्डलमध्यगता स्नानकालेऽचिरेण पुनर्जाताह्लादा सत्सङ्गात्

---

१. 'भेदाः किरात—'इत्येव पाठोऽमरकोषे तूपलभ्यते.

कृतसौहित्या कृतं सौहित्यं प्रीणनं तोषो यया सा रुचिरा सौन्दर्यवती सा नलिनी नष्टं खगृहेषु कृतागमं मुनिमण्डलं तत्समयेऽदर्शत् ददर्श ॥ **नलपक्षे**—अजगरं भस्मीकृत्याग्रे वनं गता सा दमयन्ती अतर्कितमाश्रमस्थं मुनिमण्डलं दृष्ट्वा तदन्तरगता क्षुत्तृद्व्याप्ता तत्कृतातिथ्येन जाताह्लादा पुनरचिरेण शीघ्रं कृतसौहित्या कृततृप्तिक्रिया रुचिरा तदा क्षणेनैव तन्मुनिमण्डलमन्तर्हितं ददर्श । उपगीतिः ॥

वाताधूतोदचलत्कान्तारनतिः सुबाहुसार्थपरा ।
करिवरयूथाद्भीता प्रोदचलद्दूरतोऽपि ततः ॥ ६६ ॥

**रामपक्षे**—सा रामदृष्टा नलिनी वाताधूता कान्तारगतिः सुबाहुसार्थपरा उदचलत् । वातेन कम्पिता सा कान्तानां स्त्रीणां निग्रहिलादरा शीघ्रा गतिर्येस्यां सा मुनिपत्नीकृतावगाहा सुबाहूनां शोभनभुजलतानां स्त्रीणां सार्थ एव पर उत्तमो यस्याः सा । 'दूरानात्मोत्तमाः पराः' इत्यमरः । उदचलत् । 'चल कम्पने' लङ् । चकम्पे । ततो दूरतोऽपि करिवरयूथाद्भीतातीव त्रस्ता मामुच्छेदयेयुरिति वेपथुं भेजे मन्ये वाताधूता न कम्पमाप्ता । अपि तु इत्थं विचिन्त्येत्युत्प्रेक्षालंकारो ध्वन्यते काव्यप्रकाशे ॥ **नलपक्षे तु**—मुन्यन्तर्धानानन्तरं चक्रवातव्याधूता तर्हि । 'कान्तारोऽस्त्री महावनम्' । कान्तारे महारण्ये गतिर्गमनं यस्याः सा । सुबाहुश्चेदिराजस्तत्सार्थं चेदिषु गच्छन्तं पथि प्राप्य तत्परा रात्रौ दैववशात्करियूथे तत्र प्राप्ते तैर्जिघांसितेऽकल्याणीति दिने दृष्टा प्राक् दन्तिवृन्दाद्भीता पश्चाद्दुष्टेभ्यो विरुद्धभाषिभ्योऽपि सुभीता प्रकर्षेण चकम्पे इति भावः । अत्राजीच्च ततोऽपि दूरम् । आर्यावृत्तम् ॥

सा चैलषण्डधात्री दोधूयितमाप दौर्जनात्सङ्गात् ।
चेदीशो जननीं तां बिभृयात्तर्हि स्थितिं दध्याम् ॥ ६७ ॥

**रामपक्षे**—पुनः कथंभूता सा नलिनी आसीत् । चैलषण्डधात्री सा दौर्जनात्सङ्गात् दोधूयितमाप । 'चैलं वस्त्रेऽधमे त्रिषु' इत्यमरः । चैलाश्च षण्डाश्च ये केचित्स्नातुमागताः कासारे तेषामपि सौगन्ध्येन परमेण धात्री पोषयित्री । दधातेस्तृच् । 'ऋन्नेभ्यः' इति ङीष् । तत्र दुर्जनसङ्गात् अतिकम्पमाप । कैश्चिचालितापि तदा कथं दध्यौ चेद्यदि जननीनामीशो मामिति शेषः । बिभृयात् विचिन्त्य स्वहस्ते धारयेत् तदैवाहं स्थितिमुत्तमरक्षां दध्यां धारयेयम् । 'असद्युत्तमः' इत्यत्र व्याख्यातम् । प्रयुज्यमानेऽप्रयुज्यमाने चोत्तमः स्यादसदि । अतोऽहमिति परं लभ्यम् । अजा माया तत्प्रभुरपि राम एव जातिस्मरा सा नलिनी मनसा सस्मार । चेदीशस्य रामस्य इनोऽकारो वासुदेवो यस्याः सा ईश्वरी सीता जगज्जननी मां धारयेत् तदैवाहं स्थितिमती स्यामिति तात्पर्यं मम मोक्षः स्यात् ॥ अथ **नलपक्षे**—वस्त्रखण्डधात्री । 'चैलं चेलं षण्डखण्डौ हनूमान् हनुमानपि' इति द्विरूपकोशः । सा दमयन्ती दुर्जनसार्थवाहसङ्गात् अतिकम्पं प्रापत् । दुर्जनस्यायम् । 'तस्येदम्' इत्यण् । अतःपरं सा चिन्तां चक्रे । विस्तीर्णकान्तारीभूतचेदिनगरं प्र-

तिष्ठासती चेदिपार्श्वेदीनामीट् चेदीट् तस्य चेदीशः इनः। 'इनः सूर्ये प्रभौ राजा' इत्यमरः। प्रभ्वी जननी मन्मातृभगिनी सुबाहुमाता मां बिभृयात् तर्हि अत्र कंचित्कालं स्थितिमात्मरक्षां दध्यां नान्यथा। अरं दध्यामिति पूर्ववद्याख्या। 'ईश ऐश्वर्ये'। कर्तरि क्विप्। सभङ्गः श्लेषो विचित्रः शब्दालंकारः। दोधूयितमिति। 'धूञ् कम्पने'। अस्माद्यङन्ताद्भावे क्तप्रत्ययो बोद्धव्यः॥

एवं विचिन्तयन्ती तथावनं खल्ववारुणत्पुरगा।
पुण्यश्लोकोत्तंसः पौरविमर्दं जहन्मनसा।
अनसूयाभर्तारं दृष्ट्वा गत्वाभ्यवन्दिष्ट॥ ६८॥

**रामपक्षे**—युग्मश्लोकेनान्वयः। एवं पूर्वोक्तं विचिन्तयन्ती पुरगा। 'पुर अग्रगमने' पुरतीति पुरः।'इगुपधात्कः'।'गमेर्डः'।'अन्येषामपि दृश्यते'।पुरं ब्रह्मादिदेवाग्रेसरं रामं गच्छतीति पुरगा खलु निश्चयेन तथा तेनैव प्रकारेणैव अवनं रामहस्तप्राप्तिरक्षणमवारुणत् प्राप। 'अवरोधस्तिरोधाने प्रासादान्तःपुरेऽपि च' इति विश्वः। 'विदते विन्दति प्राप्तौ भवनेवस्तुपद्धिच(?)' इति हैमः। भक्तचिन्ताज्ञेन प्रभुणा रामेण स्नानं कुर्वता सीतार्थं विचिन्त्यात्तागृहं गत्वा तस्यै भ्रमद्भ्रमरशोभिनी दत्तेति भावः॥ **नलपक्षे**—सा दमयन्ती विचिन्तयन्ती चेदिपुरगा राजमात्रा मध्येरथ्यं यान्ती लावण्यशालिनी दृष्टा प्रसादाद्धात्रीमुखेनाहूता हर्म्यानीता कृतसंभाषणा सर्वं वृत्तं निवेदितं श्रुत्वा संबन्धमात्मनो निर्णीय पुत्र्यै समर्प्य समयं कृत्वाश्रुमुखी महतादरेणैकान्ते वासं दत्त्वा स्थापयामासेति भारतकथा ध्वन्यते। 'प्रबन्धेऽप्यर्थशक्तिभूः' इति सव्यङ्ग्यं महाकाव्यत्वात्। षट्चरणं गाथाछन्दः। इत्थं वनमवारुणत् प्राप॥ **रामपक्षे**—पुण्यश्लोकोत्तंसो रामः। 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे' इत्यमरः। पौराणामयोध्यावास्तव्यानां नक्तंदिनं गतागतत्वाद्विमर्दं संमर्दमाशङ्क्य मनसा तं चित्रकूटं जहत् त्यजन्। अनसूयाभर्तारमत्रिं प्रजापतिं गत्वा सद्वयो दृष्ट्वा तमभ्यवन्दिष्ट प्राणंसीत्। वदेर्लुङि रूपम्। 'वदि अभिवादनस्तुत्योः'। अथ **नलपक्षे**—पुण्यः पवित्रः श्लोको यशो यस्य स पुण्यश्लोकस्तेषामुत्तंसः शेखर इव सत्यादिगुणशालित्वात् स नलो मनसा गुणवत्त्वादनसूयाभर्तारं गुणेषु दोषारोपणमसूया न विद्यतेऽसूया यस्य सोऽनसूयः तादृशश्चासावश्वानसूया विश्वपावत् स चासौ भर्ता तमनसूयाभर्तारं भगवन्तं वासुदेवं गत्वाभ्यवन्दिष्ट। शालिहोत्रज्ञोऽसि तच्छास्त्रमस्मभ्यं देहीति यदा पौरविमर्दोऽभूत् तं जहत् 'नाभ्यस्ताच्छतुः' इति न नुम्। मनसा विरक्तेन तत्रैव नगरे गोविन्दालयोऽभून्महान् तदासौ शीघ्रं गत्वा नारायणमूर्तिमभ्यवन्दिष्ट अस्तावीदपूपुजच्च। भर्तारं त्रिलोकीपोष्टारम्। उपगीतिवृत्तम्। इतः प्रभृति नलिनीरूपकालंकारो गतः। प्रकरणान्तरमाख्यायते॥

अवरुद्धगन्धवनितो वीरसुतस्तत्र विन्नमहः।
लङ्घितनिम्नग आर्च्छत्पारं तीरं सयोषवरः॥ ६९॥

**रामपक्षे**—अवरुद्धगन्धवनितः विन्नमहः वीरसुतः अभूत् । अस्तिर्भवन्तीनरः । अनसूयाप्राप्ताङ्गरागसीतासहितः । अवरुधिः प्राप्तौ प्राग्दर्शितः । वनितातिसुन्दरी । वीरस्य दशरथस्य सुत इति । यद्वा विर्गरुडः । बिना ईरो गतिर्यस्य सः । 'ईर गतौ कम्पने च' । 'सुतः पार्थिवपुत्रयोः' इत्यमरः । गरुडगामी चासौ राजा च । वीरसुतो राम इत्यर्थः । 'विद्लृ लाभे' । 'नुदविद–' इति निष्ठातस्य नत्वम् । अनिट् । 'मह पूजायाम्' घञर्थे कः । महः प्राप्तपूजस्तस्मान्मुनेः पुनरन्येद्युरग्रे प्रियासन् लङ्घितमहासरित् । 'युष सेवने' सौत्रो धातुः । योषणं योषः सेवा सयोषा वरा सीता यस्य सः । शुश्रूषापरेति भावः । पारं तीरं महानद्याः पारं तीरं नलवारम् आर्च्छत् प्राप । 'ऋ गतिप्रापणयोः' लङ् ॥ अथ **नलपक्षे**—'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः' इति विश्वः । 'अवरोधस्तिरोधाने' इति हैमः । गन्धो गर्वः वनिता दमयन्ती अवरुद्धे गन्धवनिते यस्य सः । अन्तर्हितदर्पोऽन्तर्हितपत्नीको राजा बाहुकत्वेन प्रसिद्धोऽयोध्यायां गुणवत्तामधिकां विलोक्य सज्जनैः पूजितो वीरसुतः वीरसेनपुत्रो लङ्घितनीचजनस्त्यक्तसङ्गः निम्नं नीचं गच्छतीति निम्नगा नीचाः । 'निम्नगो नीचमर्त्ये स्यान्नेयवत्सरिति स्त्रियाम्' इति शब्दार्णवः । वीरसेन इत्यत्र सेनलोपस्तु । 'इग्यणः संप्रसारणम्' इति सूत्रं विवृण्वानो भाष्यकार आह—दृश्यन्ते च पदेषु पदैकदेशान् प्रयुञ्जानाः । यथा देवदत्तः दत्तः देवः' इति तथात्रापि ज्ञेयम् । पुनः कथंभूतः । गोविन्ददेवालये सयोषवरो यस्य सः । हे हरे, विमुक्तस्त्रीकोऽहमचिरेण पत्नीं प्राप्नुयाम् इति वरयाचनं यस्य सः । पारमिति वेदान्तवाक्यादरात्परतरं ब्रह्मैव आर्च्छत् शरणीचकार न त्वर्वाचीनान्देवान् । एतेन नलस्य पारीणत्वमपि शास्त्रेषु ध्वन्यते । बाह्यचेष्टास्तु जनकादिवल्लोकसंग्रहार्थमेव चकारेत्यर्थः । उपगीतिवृत्तम् ॥

असुरविराधोन्माथी विरहितवनितस्ततो ह्यभवत् ।
पुण्यजनदानकारः शरभङ्गस्वाश्रयस्तुत्यः ॥ ७० ॥

**रामपक्षे**—अग्रे विराधेन रक्षसा हृतभार्यस्तदनु खमुत्पतन्तं तं शस्त्रेण निहत्य । उन्माथो घातः । 'घातोन्माथवधा अपि' इत्यमरः । पुण्यजनस्य राक्षसस्य । 'दाप् लवने' ल्युट् दानम् । तस्य छेदकारी असिना । विरुद्धलक्षणया पुण्यजनशब्दः । 'यातुधानः पुण्यजनः' इति कोशात् । तदनु शरभङ्गमुनेस्तस्यात्मीयस्य श्रयः शरणं स्तुत्यः स्तुतियोग्योऽभवत् । तेन तुष्टुवे इत्यर्थः । अथ **नलपक्षे**—विरहितवनितो दमयन्तीरहितः । अतिशयोक्तिरलंकारः । असुरास्तमोरूपास्तमोरूपविरोधकारकजनोन्माथी तत्संसर्गराहित्यात् निरहंकार इति तात्पर्यम् । 'राध संसिद्धौ' । विपूर्वो राधिर्विरोधे । 'विराद्ध एवं भवता' इति माघे । तदनन्तरं यद्राजदत्तं धनं तत्पुण्यजनेभ्यो व्यतारीत् एवं पुण्यजनदानकारः शरभङ्गः । 'शॄ हिंसायाम्' । शरो हिंसा । 'ऋदोरप्' । तस्य भङ्गो यस्य सः । शरभङ्गः साधुः स चासौ स्वश्च आश्रयो यस्य स स्तुत्योऽतिस्तुतियोग्यो वल्लभत्वात् वीरसुतो नल इति गूढोऽभिप्रायसंधिः । आसीदिति क्रिया क्रियान्तराभावे योज्या । प-

च्यादिक्रियादर्शनव्यवच्छेदे सति अन्तरङ्गत्वादस्तिक्रिया सर्वत्र योज्या। नलपक्षे 'दाञ् दाने' धातुर्ल्युटि तुल्यमेव रूपम् ॥

अजिरमहौषीत्परभागात्मानं यँस्ततः श्रमकृत्।
पिप्राय तेन रामः सुतीक्ष्णमानी पलाद्विषये ॥ ७१ ॥

**रामपक्षे**—'अजिरं विषये काये' इत्यमरः। आत्मानं सर्वभूतान्तःस्थं रामं यन् जानन् परमात्मानम्। 'इण् गतौ' शतृप्रत्ययः। 'ये गत्यर्थास्त एव ज्ञानार्थाः' इत्युक्तत्वात्। परभाग् उत्तमसेवी। 'दूरानात्मोत्तमाः पराः' इत्यमरः। 'श्रमु तपसि खेदे च'। दिवादिः। श्रमकृत् तपस्वी चितिं विधाय रामस्य पुरस्तात्कायमजिरशब्देनाहौषीत्। ज्वलिते वह्नौ। श्रमकृदिति विशेषणाच्छरभङ्ग इत्यनुवर्तते। तेन रामः पिप्राय संतुतोष। अग्रे याला रामः पलाद्विषये रक्षोविषये। पलं मांसमत्तीति पलात्। संचरत्कौणपेदेशे इत्यर्थः। सुतीक्ष्णमानी सुतीक्ष्णमुनिपूजितः सुतीक्ष्णस्य मानः पूजा सुतीक्ष्णमानः सोऽस्यास्तीति मत्वर्थीय इनिः। 'मान पूजायाम्'। ण्यन्तादेरच्। 'तलं स्यादामिषे पलम्' इत्यमरः॥ अथ **नलपक्षे**—ततः श्रमकृत्तपश्चरन्। 'श्रमस्तपसि खेदे च' इति हैमः। आत्मानं सरयूतीरे ध्यानस्थो ब्रह्मयन् परभाक् सत्सेवी रामः। प्रागेव कोश उक्तः। श्याममूर्तिर्नलः। अपि च स्वयंवरेऽग्निना वरो दत्तः सदा मदुपस्थानं स्मरणादेव तव भविष्यतीति। रं पावकममति सेवते इति रामः। 'रः पावके च तीक्ष्णे च' इति विश्वः। अग्निशुश्रूषापरस्तेन अजिरशब्दादिविषये मनसाहौषीत् तत्याज। तेन कर्मणा पिप्राय तुतोष। प्राणयात्रार्थमेव चेष्टां कृतवान्। श्रमेः पचाद्यच्। पलाद्विषये सुतीक्ष्णमानी पलाशनाश्वपालविषमस्थितोऽपि सुतीक्ष्णमानी। 'मन स्तम्भे' चुरादिः। अतितीक्ष्णजनत्यागी तद्रोधकत्वात्। आसीदिति ऊहितव्यम्। उपगीतिः॥

स किलेध्मवाहतातपदं सिषेवे गतिः पठताम्।
हृतहेतिस्तत उच्चैः पञ्चवटीमास्थितो रेमे ॥ ७२ ॥

**रामपक्षे**—पठतामधीयानानां गतिः शरणं स रामः इध्मवाहोऽगस्त्यपुत्रो वनपर्वणि प्रसिद्धस्तस्य तातोऽगस्त्यस्तस्य पदं स्थानं सिषेवे कंचित्कालं तस्थौ। 'गतिर्वेहृत्रणे मार्गे शरण्यावगमेऽपि च' इति हैमः। सर्वेषां ब्रह्मण्येव तात्पर्यमिति ततोऽगस्त्यादृतहेतिः। 'ऋ गतौ'। य एव गत्यर्थास्त एव प्राप्त्यर्थाश्च। ऋताः प्राप्ता हेतयो दिव्यास्त्रग्रामा येन स इति बहुव्रीहिः। उच्चैर्महत्त्वेनोपलक्षितो रामः पञ्चवटीमास्थितः पर्णशालायां रेमे व्यहरत् किलेति पुराणप्रसिद्धम्॥ अथ **नलपक्षे**—पठतां शालिहोत्रं पठतां नृणां गतिराचार्यभूतः स नलः प्रकृतो बुद्धिपरामृष्टत्वात् इध्मानि काष्ठानि वहन्तीति इध्मवाहः काष्ठविक्रयिणः ते च ताता अनुकम्प्याश्च। 'तातोऽनुकम्प्ये जनके' इति विश्वः। तेषां दुर्बलानां करुणया पदं परित्राणं सिषेवे। पौनःपुन्येनाकार्षित्

'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरोक्तिः । ततो दयाशाली तत्रैव सरयूतीरे समीपे च उच्चैः पञ्चानां वटवृक्षाणां समाहारः पञ्चवटी । 'द्विगोः' इति ङीप् । विश्रामार्थं निषत्तः किल रेमे । उपगीतिः । ऋतं सत्यमेव हेतिर्यस्य स इति ऋतहेतिः । 'सत्यं तथ्यमृतं सम्यक्' इत्यमरः । 'हेतिरायुधकीलयोः' इति मेदिनी ॥

सह जोषः सावरजः प्रतिदिनसवनश्चिराय वसन् ।
अतिपेशलया ऽपरया स विव्रिये कान्तमुक्तिमुदा ॥ ७३ ॥

**रामपक्षे**—सीतासहितः सलक्ष्मणः प्रतिदिनं सवनं स्नानं यस्य स गौतमीस्नायी चिरं वसन् स रामः अतिपेशलया अतिसुन्दर्या अपरया अधमया सूर्पनखया कान्तभक्तिमुदा भर्तुर्भावो भक्तिपूर्वं सहर्षया विव्रिये अव्रियत । 'व्रीङ् वृणात्यर्थे' दैवादिकः । लिट् । राक्षस्यः कामरूपत्वात्सौन्दर्यं छलेन कुर्वन्ति । तत्पेशलत्वं त्वं मम पतिर्भवेति ब्रुवत्या राक्षस्या ॥ अथ **नलपक्षे**—'षह मर्षणेऽभिभवे च' । घञर्थे कः । सहनं सहः । 'युष सेवने' सौत्रो धातुः । योषणं योषः । तितिक्षासेवी । अवरजैः शूद्रा(दा)श्वपालैर्बहुभिः संगतः । प्रतिदिनस्नायी सरय्वां चिराय तन्नगरे वसन् अतिपेशलया परया बुद्ध्या । बुद्धिस्त्रिधा व्यासोक्तत्वात् । सात्विकी, राजसी, तामसी चेति । परया उत्तमया सात्विक्या बुद्ध्या । विव्रिये वृतः । कथंभूतया बुद्ध्या । कान्तस्य भक्तिः कान्तभक्तिः तद्वन्मुत्प्रीतिर्यस्याः सा यथा सती स्वकान्तं न जहाति तथा नाजहात् । उपगीतिः ॥

लक्ष्मणजोषाद्विरता यदा तमेवाभजद्बहुधा ।
विनसा व्यधायि शीघ्रं सरुषा सा नैव रूपवती ॥ ७४ ॥

**रामपक्षे**—यदा लक्ष्मणजोषाद्विरता बहुधा तमेव लक्ष्मणं परावृत्य पतिर्भवेत्यभजत् । अहं कलत्रवानिति रामेण प्रत्याख्याता कामार्ता तदा रूपवती प्रशान्तसौन्दर्या । प्रशंसायां मतुप् । सरुषा तेनैव लक्ष्मणेन शीघ्रं छुरिकामादाय विनसा विग्रा व्यधायि सा । राक्षसीत्यर्थः । विनसोपलक्षितेत्यर्थः । इत्थंभूतलक्षणे तृतीया द्रष्टव्या ॥ अथ **नलपक्षे** व्याख्या—'तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्' इति भगवद्गीतासूक्तत्वात् यदा कदाचिदविवेकवती बुद्धिर्लक्ष्मणजोषाद्विरता श्रीमद्राजादिसेवनान्निवृत्ता बहुधा बहुभिः प्रकारैः तमेव नलं ततः परावृत्याभजत् । तदा सरुषा व्याससूत्रार्थतत्त्वज्ञेन तेन नलेन शीघ्रं चित्तसमाधानेन ज्ञानासिना विनसा छिन्ननासिकेव चक्रे कविरुत्प्रेक्षते । यद्वा द्वितीयोऽर्थः । 'णस कौटिल्ये' नसनं नसः कौटिल्यं तद्रहिता वेदान्तशास्त्राभ्यासबलेन व्यधायि चक्रे तथा सती पुनर्विवेकवतीं बुद्धिमशिश्रियत् ॥

खरदूषणगारम्या पृतनाम्ना पर्यगाद्भूयः ।
खरदूषणमुख्यास्ते रामं जघ्नुर्बलेन वृताः ॥ ७५ ॥

**रामपक्षे**—खरदूषणगारम्या पृतनाम्ना भूयः पर्यगात् परावृत्य अगात् सूर्पणखा कौणपी अहं निरपराधा पञ्चवटीवासिना तापसेन चरन्ती स्वेच्छया व्यग्रा कृता नरमा-

त्रेण। तच्छ्रुत्वा तामेव पुरोधाय पृतना चमूश्चतुर्दशसहस्राणि रक्षांसि तेषामग्रा। 'प्राग्राग्र्याग्रीयमग्रियम्' इत्यमरः। तदग्रेसरारामं दर्शयामास ते खरदूषणमुख्या महाचक्रेण वृताः शितैः शरैः रामं जघ्नुः ताडयामासुः। हन्तिस्ताडनार्थोऽत्र। 'आजघ्ने विषमविलोचनस्य वक्षः' इति भारविः॥ अथ **नलपक्षे**—सा तामसी बुद्धिर्नलेन विनसेव कृता। ततः परावृत्य खराणि तीक्ष्णानि दूषणानि येषां ते खरदूषणाः अतिप्रवणपापसमूहाः ब्रह्महत्यादयस्तत्समीपगामिनी महाराजमहामोहसेनामुख्याभूत्। तद्बलमादाय कामक्रोधनृशंसत्वजैह्मवाक्पारुष्यादिकास्तत्र रामं श्यामाङ्गं नलं जघ्नुर्विव्यधुः। स तु पुरुषसूक्तादिपाठेन द्वादशाक्षरवैष्णवमन्त्रेण तत्कटकं पलायनपरं चक्रे। सा तामस्यपि पराजिता पलायिष्ट तद्गतविध्वस्तपलायितैः सह। उपगीतिः॥

नैव चचाल तदासौ निहन्यमानोऽपि पुण्ययशाः।
लक्ष्मणनिक्षिप्तवरो व्याधूना तत्प्रतिक्रियस्तान्द्राक् ॥ ७६ ॥

**रामपक्षे**—तदासौ तैर्निहन्यमानोऽपि नग इव रामो नैव चकम्पे। 'चल कम्पने' लिट्। कथंभूतः। पुण्ययशाः पुण्यकीर्तिः। नामोच्चारणमात्रेण सतां गतिप्रदत्वात्। पुनः कथंभूतः। लक्ष्मणनिक्षिप्तवरः। लक्ष्मणे निक्षिप्ता वरा श्रेष्ठप्रिया सीता येन सः। निक्षिप्ता न्यस्तेत्यर्थः। संग्रामसमये भेष्यतीति। 'गोस्त्रियोः' इति ह्रस्वः। आग्नेयं वारुणेन जघानेत्यादि तदस्त्रप्रतीकारकदिव्यास्त्रैः प्रतिकर्ता व्यपोहिता शीघ्रं चतुर्दशसाहस्रं बलममीमरदित्यर्थः॥ अथ **नलपक्षे**—तादृग्बलसंस्थानेऽपि पुण्ययशा नलः स्थिरबुद्धित्वात् लक्ष्मणेषु श्रीमदान्धेषु निक्षिप्ता वरा। 'वृञ् वरणे'। संसारवेष्टकत्वाद्वरा अविद्या येन स इति बहुव्रीहिः। त्वं मदान्धेषु गच्छेति तां प्रत्याय परया विद्यया नैव गिरिरिव चकम्पे विष्णुभक्त्येति भावः। किं तु श्रवणादिभिस्तान् पातकसमूहान् द्राक् प्रतिकारकैर्भजनैर्व्याधूनादिति भावः। श्रीमद्भागवतीयपुरंजनोपाख्यानोक्तरीत्यातिशयोक्त्यलंकारेण सर्वमारोप्यम्। उपगीतिः॥

प्रतिपक्षहाचकासीत्प्रतिविधि पारीण उग्रतपाः।
सहजोषः सावरजो विललास पुनः कुटीजोषः ॥ ७७ ॥

**रामपक्षे**—प्रतिविधिपारीणः प्रतिकारपारगामी उग्रतपा भयंकरतापकः स्वयं च महातपाः खरदूषणादिप्रतिपक्षहन्ता अचकासीत् रराज। पुनः कथंभूतः। पञ्चवटीकुटीजोषः। 'जुषी प्रीतिसेवनयोः'। जोषणं जोषः। भावे घञ्। कुट्याः पञ्चवट्याः जोषः सेवकः। तत्र निवसन् विललास। किंभूतः। सहजोषः जोषया सीतया सहितः सावरजः सलक्ष्मणः। 'यवीयोवरजानुजाः' इत्यमरः॥ अथ **नलपक्षे**—वेदान्तशास्त्रानुगा व्याख्या। प्रक्रिया प्राग्दर्शिता। पारगामीत्यादि समानम्। सहजोषः तितिक्षुः। योषेण सहितः सेवकश्च। सहं तिरस्कारं सहत इति सहजोषः। उपपत्तिः शब्दस्य प्राग्दर्शिता। पुनः कुटीजोषः आर्तुपर्णे तार्णगृहे वसन्। 'वासः कुटी द्वयोः शाला' इत्यमरः। अश्वसंबन्धिविलासेन सहाकरोदित्यर्थः। उपगीतिः॥

सा रावणान्तमार्च्छद्विनसा दायादपिञ्जना मङ्क्षु ।
आचक्रन्द परात्मश्रयणोत्था घातवर्णिनी तत्र ॥ ७८ ॥

**रामपक्षे**—विनसा दायादपिञ्जना सा मङ्क्षु रावणान्तमार्च्छत् । 'अन्तः स्वरूपे निकटे नाशनिश्चययोरपि' इति हैमः । रावणसमीपं जगाम । 'दायादौ सुतबान्धवौ' । 'पिजि हिंसायाम्' । दायादानां बान्धवानां पिञ्जनं मारणं यस्याः सा । विगतनासिकयोपलक्षिताम् । 'द्राङ्मङ्क्षु सपदि द्रुते' इत्यमरः । मङ्क्षु शीघ्रम् । तत्र रावणसभायां सा शूर्पणखा परात्मश्रयणोत्थाघातवर्तिनी आचक्रन्द रुरोद । परात्मनो विष्णोः श्रयणं येषां ते परात्मश्रयणा वैष्णवाः पञ्चवटीवास्तव्यमुनयः अस्मत्प्रतिकूलाः तदुत्थो य आघातः कदनं खरादीनां तस्य चरितस्य वर्णनशीलाः । वर्णयतेस्ताच्छील्ये णिनिः । भवदादिष्टमुनिपुत्रभक्षणशीलाया मे तापसाभ्यां तत्र वसद्भ्यां मुनिहिताभ्यां चतुर्दशसाहस्रखरादिघातोऽकारि । सहासं मे दशा चैषा कृता इति वदन्त्यरोदीदिति रामायणकथानुसंधेया ॥ अथ **नलपक्षे**—सा परा विवेकवती बुद्धिर्जातदायादपिञ्जनाविकौटिल्या द्राक् रावणान्तं महामोहनृपतेः सकाशं जगाम । अविद्यासंघस्य महामोहमूलत्वात्स एव राजा समुज्जृम्भते । 'प्रत्यन्तो म्लेच्छदेशः स्यात्' इति कोशस्वारस्यात्तदधिष्ठानो महामोह इति मीमांसनीयम् । रावयति रोदयति सर्वान् यमनगरवर्धित्वादिति महामोहः स चाहंममतामूलकः तत्प्राचुर्यं तमःप्रधानेषु ज्ञेयम् । 'विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात्साध्यवसानिका' इति काव्यप्रकाशे व्याख्यातम् । शुद्धलक्षणायां महामोहशब्दानुपादानम् । रावण एवायमित्यध्यवसानात् । विस्तरभीत्या बहुलं नोच्यतेऽस्माभिः । परात्मनो विष्णोः श्रयणं यस्य स नलस्तदुत्थो य आत्मीयाघातस्तद्वर्णिनीत्यर्थः । विपक्षवर्धकत्वात्तस्य आत्मनश्च हीयमानबलत्वादाचक्रन्द विललापेति तात्पर्यार्थः । गीतिः ॥

विगतस्पशत्त्वलघुतः को न कुलं घातयेन्मूढः ।
इत्थं संश्रुतकदनो मारीचं शिश्रिये जवतः ॥ ७९ ॥

**रामपक्षे**—किमाहेत्याह—विगतस्पशत्त्वलघुतः को मूढः कुलं न घातयेत् । अपि तु सर्वोऽपि । 'अपसर्पश्चरः स्पशः' इत्यमरोक्तिः । विगतचारत्वेन लघुता यस्य सः । चारनेत्रविहीनः को मूढो राजा त्वादृशः कुलं वंशं न मारयेत् । अपि तु मारयेदेव । इत्थं 'कद वैक्लव्ये' घटादिः । संश्रुतकुलनाशो गत्वा वेगेन मारीचं राक्षसं समुद्रकूले वसन्तं प्राह—शिश्रिये कार्यार्थं सामपूर्वं शिश्रिये इति पदव्यङ्ग्यम् । इत्थमिति त्यदादीनां बुद्धिस्थपरामर्शकत्वात् जनस्थाने मायामृगो भूत्वा रामं वञ्चयन्नेव दवीयोदेशं गमय, अहं त्वामनुगत्वा तज्जायां हृत्वा पारेसमुद्रं नीत्वा रंस्ये तया सहेति रामायणकथानुसंधेया । प्रबन्धोऽयमित्थंपदद्योत्यः । इत्थमिति देहलीदीपन्यायेनोभाभ्यां संबध्यते ॥ अथ **नलपक्षे**—समहामोहस्य तामसराजसत्वान्महामोहः शब्दादिवि-

षयग्रामसकाशं गत्वा स्वप्ने विषयमृगतृष्णासमूहं तस्मै नलाय तत्र द्रुतं प्राहिणोत् । मरीचीनां विकारो मारीचम् । 'मृगतृष्णा मरीचिका' इत्यनुशासनम् । मध्याह्नार्के सैकतपुञ्जोऽपि पयःपूरत्वमापद्यते इति प्रसिद्धम् । तदस्मिन्नास्तीति विषयग्राम एव मारीचः । अर्शआद्यच् । निद्रावस्थायां रामं श्यामाङ्गं मिथ्याभूतमारीचं दर्शयध्वम् । निगीर्याध्यवसानरूपातिशयोक्त्यलंकारेणोपमानमात्रं शिष्यते भरतानुशासनात्काव्यप्रकाशे 'विहायसि विहारिणी लसतु नाम सौदामिनी' इत्यादि दृष्टान्ता द्रष्टव्याः । आनृशंस्येन नृशंसत्वादयोजिता इति नलेन महामोहस्येनाकदनं कृतं पूर्वम् । इदानीं विषयग्रामं मारीचं परिणतौ मिथ्याभूतं साकेते नलाभ्यासे प्रेषयामासेत्यर्थः । उपगीतिवृत्तम् ॥

अभ्यर्थितस्तु तेन प्रोद्विग्नमना गतो रामम् ।
महसान्धमाक्षिपन्तं सगरं प्रैक्षिष्ट गत्वा सः ॥ ८० ॥

**रामपक्षे**—तेन रावणेन तु निश्चयेन अभ्यर्थितो मारीचः प्रोद्विग्नचित्तः पञ्चवटीस्थं रामं गतः पूर्वं रामचरितश्रवणेऽपि यदासौ नामंस्त तदा तस्मादेव मर्तव्यमिति निश्चित्य गतोऽयमिति प्रोद्विग्नचित्तपदेन ध्वन्यते । कथंभूतः । महसा तेजसा ज्ञानप्रकाशेन अविद्यान्धकारमाक्षिपन्तं गत्वा रामं प्रैक्षिष्ट स प्रशब्दो दूरवाची । 'क्षौद्रेऽप्यन्धं तमस्यपि' इति कोशवाक्यम् । कथंभूतम् । सगरम् । 'गॄ शब्दे' । 'ऋदोरप्' । गरेण मुनिस्तवेन सहितम् । मुनिभिः स्तूयमानमित्यर्थः ॥ अथ **नलपक्षे**—तेन महामोहेन राज्ञा तु निश्चयेनाभ्यर्थितः शब्दादिविषयग्रामरूपो मारीचः प्रोद्विग्नमना भीतचित्तो रामं नलं गतः । कथंभूतम् । महसा ज्ञानप्रकाशेनान्धमविद्यान्धकारमाक्षिपन्तम् । परया सात्त्विकबुद्ध्याश्लिष्टम् । स विषयरूपमारीचः प्रैक्षिष्ट । स्वप्ने इति शेषः । राज्यलक्ष्मीं दृष्ट्वा चित्रां हरिं ध्यात्वा प्रबुद्धः सन् मारीचं फल्गूकृत्य व्यनीनशत् । प्रत्युत्तरेणाश्वपालादिस्तुत्या युक्तं प्रैक्षिष्ट मारीचः ध्यानविषयत्वे हरेर्विषयग्रामो वरीमृशीतीत्यर्थः ॥

निस्तर्हणं चिकीर्षन्प्रार्थितमपदिश्य कान्तायाः ।
प्रतिदूरं प्रणियातोऽमुष्य पलाशोद्विषंस्तर्हि ॥ ८१ ॥

**रामपक्षे**—कान्तायाः सीतायाः प्रार्थितं प्रकृष्टकनकमृगमानयेति याचितं व्यपदिश्य लक्ष्यीकृत्य तस्य मारीचस्य निस्तर्हणं निहननं चिकीर्षन् रामो मायाविना वञ्चितोऽतिदूरं प्रणियातोऽभूत् । कथंभूतः । अमुष्य पलाशो द्विषन् वैरी । पलमश्नातीति पलाद् । 'अश भोजने' । 'क्विप् च' इति कर्तरि क्विप् । 'द्विषः शतुर्वा' इति पक्षे षष्ठी । प्रणियात इति 'नेर्गद-' इति णत्वं बोध्यम् ॥ **नलपक्षे**—कान्तायाः परस्या बुद्धेरपसारणरूपं प्रार्थितमपदिश्य स्वप्ने विषयव्यतिकरस्य निहननं कर्तुमिच्छन् दूरमतिक्रान्तोऽतिदूरं स्वहृत्पद्मवर्ती साक्षी चिद्रूपस्तं प्रणियातः शरणीचक्रे । कथंभूतो नलः । अमुष्य पलाशो रक्षोरूपविषयव्यतिकरस्य संसारहेतोर्द्विषन् शत्रुः । उपगीतिः ॥

अतिलक्ष्मणान्तसंस्था क्रन्दं पर्यूह्य कान्ता सा ।
स्वाम्यास्ते शत्रुहतिः परं प्ररक्षेहि शीघ्रमित्यवदत् ॥ ८२ ॥

**रामपक्षे**—अतिलक्ष्मणान्तसंस्था सा सीता क्रन्दं पर्यूह्य हे देवर, शत्रुहतिर्मम स्वामी आस्ते । परं स्वामिनं प्ररक्ष शीघ्रमिहि गच्छेत्यवदत् । 'तु हि च स्म ह वै पादपूरणे पूजने स्वति' इत्यमरः । अतिशयितप्रशस्तश्चासौ लक्ष्मणश्चेति कर्मधारयः । 'अन्तः स्वरूपे निकटे' इति हैमः । रामसंघुषितमाचर्य यतो मारीचः प्राणान् जहौ इति सीता बभ्राम ॥ अथ **नलपक्षे**—सा प्रसिद्धा परा कान्ता नाली अतिशयितश्रीमन्निकटसंस्था परा आत्मध्यानवशात्पलायितायास्तस्याः क्रन्दं पर्यूह्य वितर्क्य शत्रूणां हतिर्यतस्तादृशो मुकुन्द आस्ते तमेव शीघ्रमिहि प्रपद्यस्व प्ररक्ष उपसर्गाद्वोपाय भौतिकं पिण्डमित्यवदत् । उपगीतिः ॥

अतिलक्ष्मणो न मेने प्रभाववित्तस्य तद्वचनम् ।
समुदासिष्ट त्वराणीविजनासीनोऽपरां शोचन् ॥ ८३ ॥

**रामपक्षे**—तस्य प्रभावविदिति लक्ष्मणः तद्वचनं न मेने । तर्हि किमकरोदित्याह—त्वराणीविजनासीनः अपरां छायासीतां शोचन् कौणपो मामन्तरेण हरिष्यतीति शोचन् । कथंभूतः । प्रभाववित् त्रिलोकीसंहारेऽपि समर्थः । प्रभुणा हतः क्रव्यादः तदनुकरणीं विलपति सा तु वाक्पाटवं यदाकार्षीत्तदापासरदित्यर्थः । आसेर्लुङ् ॥ अथ **नलपक्षे**—केवलवृत्तये ऋतुपर्णं विना श्रीमतोऽन्यानतिक्रान्तः अतिलक्ष्मणः श्यामाङ्गस्तस्य साक्षिचैतन्यस्य प्रभाववित् तद्वचनं सात्विकधीवचनं न मेने इति न । अपि तु मेने इति काकुः । स्वप्नावस्थायामिति शेषः । अपरां शोचन् विषयव्यतिकरेण तुच्छापरा मां भ्रंशयितुमागता ध्यानानुभावादात्मनः क्रन्दन्ती दुर्दशापलायितेति कष्टंगतेति शोचन् । शेषं समानम् । उद्गीतिः ॥

बलवन्तमरिं हत्वा निरवारीदुत्तमश्लोकः ।
रावण इह चावसरे भिक्षुवपुस्तामुपासार्षीत् ॥ ८४ ॥

**रामपक्षे**—उत्तमश्लोको रामः मायापारीणत्वाद्बलवत्तां मरीचस्य । परिकरालंकारः । बलवन्तं मारीचं हत्वा निरवारीत् आह्लादिष्ट । 'आह्लादने निर्वृणोति' इति भट्टमल्लः । च पुनः इहावसरे भ्रातृद्वयरहितसमये भिक्षुवपुः संन्यासिरूपो रावणः तामुपासार्षीत् आजगाम ॥ अथ **नलपक्षे**—उत्तमश्लोकः पुण्यकीर्तिर्नलः बलवन्तं विषयव्यतिकरमरिं हत्वा निरवारीत् । 'निर्वाकृ परमानन्दे' इति शब्दार्णवः । च पुनरिहावसरे अभिक्षुवपुर्महामोहः गृहिमेदः नलकृतेनानुशयेन मरिष्यतीति रागवतीं तां बुद्धिमनुनेतुमुपासार्षीत् । उपगीतिः ॥

बहुधा प्रतार्य जह्ने छायां शोशुच्यमानां ताम् ।
खगराजमात्रशरणां त्रिकूटधरकेतनो दुष्टः ॥ ८५ ॥

**रामपक्षे**—त्रिकूटधरकेतनो दुष्टः बहुधा प्रतार्य शोशुच्यमानां छायां तां सीतां जहे । कथंभूताम् । खगराजमात्रशरणाम् ।'अहार्यधरपर्वताः' इति कोशः । त्रिकूटाचलवासी दुष्टः कितवः । 'कित निवासे' । भावे ल्युट् । मध्येमार्गं जटायुमात्रशरणां दाशरथप्रीतिविचाराद्रावणेन घोरं युद्धं कृत्वा प्राणत्यागी स ईदृशः शरणं रक्षणं यस्याः सा शरणं रक्षणः नान्यः कोऽपीति व्यञ्जयितुं मात्रशब्दः । हा रामेति शोशुच्यमानाम् । शुचेर्यङन्तात्कर्तरि शानच् । विहायसा रथेन नीयमानां तां जहे ॥ अथ **नलपक्षे**—त्रिकूटधरकेतनो दुष्टो महामोहः त्रयः कूटा इव कामक्रोधलोभा यस्य तादृशधरनिवासी प्राणिदेहरूपोऽधरः । 'त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः' इति भगवद्वाक्यात् । रोरूयमाणां रागवतीं बुद्धिं मा कृथा इति बहुधा प्रतार्य जहे । शीघ्रं पौनःपुन्येन शोचन्तीं तां रागवतीं बुद्धिम् । कथंभूताम् । खगराजमात्रशरणां खगराजस्य मा लक्ष्मीः शोभा। 'लक्ष्मीः संपदि शोभायाम्' इति हैमः । तां त्रायत इति खगराजमात्रः स विष्णुः शरणम् । 'शॄ हिंसायाम्' । ल्युट् । घातसाधनं यस्याः सा । हरिनामशरणा एव तां हातुं पारयन्तीति गूढोऽभिप्रायः । विशेष्यं विनापि बुद्धिस्थविशेषणपदानि प्रयुज्यन्ते इत्यर्थवत्सूत्रे ज्ञापितं सूत्रकारेण । शब्दरूपशब्दस्य विप्रकृष्टस्यानुवृत्तेरभावात् । अतएवोद्योगपर्वणि विदुरवाक्यम्—'एकया द्वे विनिर्जित्य त्रींश्चतुर्भिर्वशं कुरु । पञ्च जित्वा विदित्वा च सप्त जित्वा सुखी भव ॥' इति । विशेष्यमत्रापि नास्ति । उपगीतिः ॥

हिंसीरमध्यसंस्था ह्यशोकवनिकागता रामा ।
आश्रयमेवाशोचत्पौरस्त्यं ध्यानमूकत्वा ॥ ८६ ॥

**रामपक्षे**—हिंसीरं राक्षसीवृन्दं तन्मध्यसंस्था अशोकवनिकागता रामा सीता ध्यानेन मूकत्वं यस्याः सा ध्यानमूकत्वा हि निश्चयेन पौरस्त्यं पतिं राममाश्रयं शरणमेवाशोचत् ॥ अथ **नलपक्षे**—नास्तिक्यमदक्रोधादि हिंसीरमध्यसंस्था हि ध्यानमूकत्वा रागवती धीः अशोकवनीतः तत्राशोकवृक्षसमूहान्तराले जनाश्रयोऽभूत् तत्रस्थः कं सुखं सस्वदे । 'केणः' इति ह्रस्वः । तत आगता तिरस्कृता नलेन पौरस्त्यमाश्रयमेवाशोचत् स दुर्जयो वैरिसेनिः कदा मया भग्नः करिष्यत इति । उपगीतिः ।

श्यामाङ्गो व्यावृत्य व्यचिनोदपरां रजोव्याप्तः ।
नापश्यद्व्यलपच्च प्रादर्शल्लक्ष्मणं तत्र ॥ ८७ ॥

**रामपक्षे**—रजोव्याप्तः श्यामाङ्गो रामः मेघश्यामत्वात् अपरां छायासीतां व्यचिनोत् अन्वेषयामास । 'संवीक्षणं विचयनम्' इत्यमरः । तत्र नापश्यत् लक्ष्मणं प्रादर्शत् । च पुनर्व्यलपत् । दीपकालंकारः । भावशबलता च व्यङ्ग्या ॥ अथ **नलपक्षे**—श्यामाङ्गो बाहुको नाम जाग्रदवस्थायां ज्ञानकर्मेन्द्रियव्यापारवत्तां प्रकाशते । जाग्रदवस्थां ध्वनयितुमेव कविना रजोव्याप्तमिति पदं प्रयुक्तम् । एतत्प्राचीनपद्येष्वत एव स्वप्नावस्था ध्वनिता रजोव्याप्तो व्यावृत्य निवृत्य पूर्वव्यापारात् अपरां राजसीं धियमन्वियेष ।

महतामपि शोचावेशात् कदाचिद्रजोगुणव्यतिषङ्गो जायत एवेति सूचितम् । 'मनसो निग्रहं मन्ये वायोरिव सुदुष्करम्' इति गीतासु । तत्र नापश्यद्रागाकुलो दमयन्तीरूपमिभूतां विचिन्वन्नपि लक्ष्मणमृतुपर्णं प्रणामार्थं प्रादर्शत् । उपह्वरे दमयन्तीप्रेम्णा व्यलपच्च । उपगीतिः ॥

कृतसंभाषोऽनेन प्राभ्राम्यत्कानने प्रचरन् ।
खगराजगतिं कृत्वा व्यायतदोषं कबन्धमथ ॥ ८८ ॥
असमानं निजमूर्तिं प्रैक्षिष्ट विकर्तनेन पुनः सः ।
युक्त्या युक्त्वा व्यचरत्स कानने श्रीमतां धुर्यः ॥ ८९ ॥

(युग्मम्)

**रामपक्षे**—कानने प्रचरन् अनेन कृतसंभाषः प्राभ्राम्यत् दूरदेशेऽभ्रमीत् । प्रशब्दो दूरवाची । युग्मश्लोकेनान्वयः । सीतां व्याहृतकदुर्वार्तां सौमित्रिराचष्ट अतोऽहं निरगममिति । पुनरग्रे गतौ मध्येमार्गं जटायुषा किंचित्संभाष्य तद्गतिं वैकुण्ठीयां विधाय । अथाग्रे व्यायतदोषं कबन्धं रामः प्रैक्षिष्ट । कथंभूतम् । व्यायतदोषं योजनायामबाहुम् । पुनः कथंभूतम् । निजमूर्तिमात्मदेहं ग्रसमानं मध्ये पातात् । पुनर्विकर्तनेन तद्बाहुच्छेदेन युक्त्या युक्त्वा संयोज्य पुनः श्रीमतां धुर्यो रामः स कानने दण्डकवने व्यचरत् ॥ अथ **नलपक्षे**—अनेन ऋतुपर्णेन कृतसंभाषः कुत्रचिन्नरोपवने महति प्रचरन्नभ्राम्यत् । पुनः कथंभूतः । श्रीमतां विज्ञानसंपत्तिमतां धुर्यः स नलः कदाचित्पञ्चाशत्कोटियोजनपृथ्वीमण्डलव्यापकत्वाद्दीर्घभुजमिव । केन विषयसुखेन । 'सुखशीर्षजलेषु कम्' इति विश्वः । बन्धः संसारबन्धो यस्मात् तमीदृशं निजमूर्तिं ग्रसमानमिव प्रैक्षिष्ट स्वप्ने जागरे च तदा खगराजगतिम् । 'खं ब्रह्म' इति श्रुतेः । खेन गरो वर्णनं यस्य स चासावजश्च तद्गतिं तदवबोधं युक्त्या करणभूतया तं कबन्धं ज्ञानासिना विकर्तनेन संयोज्य कानने । 'सत्यं ज्ञानमानन्दं ब्रह्म' इति श्रुतेः । केनानन्देनाननं जीवनं यतः । 'अन प्राणने' ल्युट् । तत्र ज्ञानात्मके परे ब्रह्मणि व्यचरत् । इत्थं नलो वर्तत इति भावः । उपगीतिः ॥

शबरीकृतसंवादो गतिदोऽज्ञानां परं सरोऽजुषत ।
सावरजो धुर्यमतिर्विलक्षणं कान्तिपूरवहम् ॥ ९० ॥

**रामपक्षे**—शबरीकृतसंवादः अज्ञानां गतिदः सावरजः धुर्यमतिः विलक्षणं कान्तिपूरवहं सरः अजुषत ॥ **नलपक्षे**—निगीर्याध्यवसानरूपातिशयोक्त्यलंकारः । अहं तां शबरीं कदाचिच्छोकतमःप्रादुर्भावेन तया कृतसंवादः गत्वा रात्रौ पुष्करं हन्यां वा इत्यादि तत्संवादः पुनर्जागरे तद्विधूय अज्ञानां गतिदो ज्ञानद्वारा परं सर आनन्दरूपं ब्रह्मसरः अजुषत असेवत । सावरजः शूद्राश्वपालान्तरसहितः । धुर्या मतिर्यस्य सः । कथंभूतं सरः । विलक्षणमनिर्वचनीयं कान्तिपूरवहं कोटिसूर्यसमप्रभम् । 'तमेव भान्त-

मनुभाति' इति श्रुतेः । पूरः । 'भेदाः किरातशबर–' इत्यमरः । गत्यर्थानां ज्ञानार्थत्वात् कातिदैक्षित्वं (?) व्याख्यातम् । गतिर्ज्ञानम् ॥

पवमानजनस्तावच्छ्यामावयवेन संवदितुम् ।
आयात्सुग्रीवसुहृद्विनयेन च वार्तमाचारीत् ॥ ९१ ॥

**रामपक्षे**—तावत्सुग्रीवमित्रं पवमानजनो हनुमान् श्यामावयवेन संवदितुमायात् वार्तमाचारीत् यावत्सरसि गतं तर्ह्येव । वृतसमूहम् । 'तस्य समूहः' इत्यण् । कौ युवां त्रैलोक्यकर्तारौ भासेथे इत्यादि पवमानजनो वायुपुत्रो हनूमान् । जननं जनः । 'जनिवध्योश्च' इति घञि वृद्धिनिषेधः । श्यामावयवो रामः । 'रामः श्यामः प्रसन्नः' इति रामायणे ॥ **नलपक्षे**—तावत्सुग्रीवो भीमः तत्सुहृत् । सुग्रीवत्वं च हरिनामकीर्तनाच्चारुकण्ठत्वं भवति । 'बर्हायिते ते नयने नराणाम्' इत्यादि श्रीमद्भागवतं प्रमाणम् । पवमानः पवित्रस्तादृशो जनो विप्रः भूदेवत्वात् । श्यामावयवेन बाहुकेन संवादं कर्तुमपूर्वशीलत्वात् चतुर्दिक्षु भीमप्रेरिता द्विजा गतास्तस्य नलस्यान्वेषणाय तेषामेक ऋतुपर्णनगरे वसन् सायं विलापगर्भपद्यं शुश्राव तत्समीपमागत्य विनयनेन वार्तमाचारीत् तद्वृत्तव्यतिकरं चित्ते प्रणिधाय जह्लादे श्रृण्वन् । उपगीतिः ॥

किं वार्तमाचारीत् इत्याह—नलपक्षे—स भीमप्रेरितो द्विजस्तं बाहुकमाह—

लोकोत्तरवृत्तान्तः सलक्ष्मणस्त्वं विराजसे श्रीमान् ।
हरिणा मैत्रीं क्षिप्रं स्वकार्यघटनां प्रकुर्वीथाः ॥ ९२ ॥

**रामपक्षे**—अङ्ग हे सलक्ष्मणस्त्वं लोकोत्तरवृत्तान्तो मतिमानतिमेधावी विराजसे । उत्तरालंकारेण रामेणापि स्ववृत्तमुक्तोऽसाविति गम्यते । सलक्ष्मणपदेन । हरिणा कपिना सुग्रीवेण क्षिप्रं मैत्रीं कुरु । कथंभूताम् । स्वकार्यस्य सीताप्राप्तिरूपकार्यस्य घटना यस्याः सा । इत्थं विनयेन हनूमान् राममाहेति बोध्यम् ॥ अथ **नलपक्षे**—लक्ष्मणः प्रशस्तसामुद्रिकचिह्नानि प्रशस्तबुद्धिः स प्रसिद्धस्त्वं भवसि कश्चित् कल्पाविष्टपतिकृतत्यागात्तया भैम्या पत्ये नासूयितव्यम् इत्यादिगाथाः कथयंस्त्वं लोकोत्तरवृत्तान्तस्त्वमिति पदेन वस्तुना काव्यलिङ्गालंकारो व्यज्यते । इत्थं सायं वदन्तमाकर्ण्य विप्रो नल इति ज्ञात्वा तदन्तिकगामी प्रशंसा लोकोत्तरेत्यादि चक्रे इति ध्वनिः । अतः परं हरिणाच्युतेन दारसंयोगदां मैत्रीं प्रकुर्वीथाः कुरु साधो इति ब्राह्मणो निपुणाय निपुणं गूढार्थमुत्तरमदादिति साकूतम् ॥

ओमित्युक्त्वा मैत्रीं विशेषतो हारगस्तु भवन् ।
रामः कृतवान्मैत्रीं दार्ढ्येन तदाप्रभृत्येव ॥ ९३ ॥

**रामपक्षे**—रामो मित्रं मारुतिमोमित्युक्त्वा तथैव करिष्य इति प्रोच्य विशेषतस्तु हारगो हरेरयं स्कन्धः । 'तस्येदम्' इत्यण् । हारेण स्कन्धेन गन्ता भवन् तदाप्रभृत्येव ऋष्यमूकस्थसुग्रीवेण सह दार्ढ्येन मैत्रीं कृतवान् अग्निसाक्षिकत्वेन वालिनं हत्वा त्वां राज्ये

स्थापयिष्यामीति दार्ढ्यम् ॥ अथ **नलपक्षे**—स रामो नलो मित्रं विप्रमोमित्युक्त्वा तु पुनर्विशेषतोऽस्मरणादिव व्यतिकरभजनं कुर्वन् तदाप्रभृत्येव कामनामुद्दिश्य दार्ढ्येन मैत्रीं कृतवान् । उपगीतिः ॥

तत्प्रत्ययाय मतिमान्व्याततत्तृणराजसंभेदः ।
कान्ताभूषणसङ्गः कालमतिक्रान्तवांस्तत्र ॥ ९४ ॥

**रामपक्षे**—तत्र मतिमान् रामः कालमतिक्रान्तवान् । कथंभूतः । व्याततः कृतः तृणराजानां सप्तानां बाणेन संभेदो येन सः । 'तृणराजाह्वयस्तालः' इत्यमरः । पुनः कथंभूतः । कान्ताभूषणसङ्गः रक्षसा विहायसा नीयमानाभिज्ञानाय सीताभूषणं नूपुरमसुञ्चत्तद्भूषणजाताह्लादः ॥ अथ **नलपक्षे**—तत्र तादृशहरिज्ञानाय व्याततः तृणस्य राज्ञश्च संभेदः संगमनं येन सः तयोरभेदप्रतिपत्तिः । अत एव प्रशस्तबुद्धिः । 'भिन्नौ दारितसंगतौ' इति विश्वः । कान्तश्चासावश्व स भूषणं येषां तद्भक्तास्तत्सङ्ग इत्यर्थः । कालमतिक्रान्तत्वात् । उपगीतिः ॥

बलिवालिघातकारी धीसचिवह्लादसंतुष्टः ।
वर्षणकालविनायी सलक्ष्मणोसत्परो व्यलसत् ॥ ९५ ॥

**रामपक्षे**—बली चासौ वाली च तद्घातकारी एकबाणेन । धीसचिवो हनूमान् तत्कृतह्लादतुष्टः वर्षर्तुव्यतिवाही । 'विनयोऽपहृतौ दण्डे शिक्षानम्रत्वयोरपि' इति हैमः । अत्र 'विनीञ् हरणे' । लक्ष्मणयुक् । असन्तः पापाः परे शत्रवो यस्य सः असत्परः । व्यलसत् व्यहरत् ॥ अथ **नलपक्षे**—बली यो वाली तद्घातको यो रामो भगवांस्तमृच्छति शरणीकरोति इति 'सुप्यजातौ–'इति णिनिः । धीसचिवेति । धीरेव सहायभूता यस्य स ज्ञानजन्यह्लादेन संतुष्टः । वर्षणकालः प्रावृट्कालः तद्विनायी प्रशस्तपद्मादिरेखाचिह्नः । असत्परः दुर्जनशत्रुः । तत्र व्यलसत् अश्वपालनक्रियादिनाकरोत् । उपगीतिः ॥

भीमगृहं गतवत्या द्विजवचनप्रीतिकारिण्या ।
अन्वेष्टं सांकेत्यं तर्ह्यादाय प्रतिष्कशा निरयुः ॥ ९६ ॥

**रामपक्षे**—तर्हि प्रतिष्कशा अन्वेष्टुं निरयुः । किं कृत्वा । भीमगृहं गतवत्या द्विजवचनप्रीतिकारिण्याः सीतायाः सांकेत्यमादाय । 'भीमोऽम्लवेतसे शंभौ भीमसेने भयानके' इति हैमः । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । जटायुर्वचनेन प्रीतिदायिन्या भयंकरं लङ्केशगृहं गतवत्याः अन्यत्र वा स्यात्स्थापिता चारेणेति चतुर्दिक्षु ते ययुः । तत्संकेतान् बहूनादाय । 'प्रतिष्कशः सहाये स्याद्वार्ताहरपुरोगयोः' इति शब्दार्णवः ॥ अथ **नलपक्षे**—भीमगृहं प्रागेव द्विजेन प्रापितेत्युत्तरालंकारेण सूच्यते । प्रतिष्कशाः । नलमिति शेषः । अन्वेष्टुं निरयुः । भीमप्रेरिता दूता दिक्षु जगमुरित्यर्थः । किं कृत्वा ।

पूर्वं द्विजवचनप्रीतिकारिण्याः भीमगृहं गतवत्या दमयन्त्याः सांकेत्यं वस्त्रच्छेदादि आदाय गृहीत्वा । उपगीतिः ॥

प्राप्तसुवर्णसमुद्रः पवमानजनस्तु तत्रैकः ।
साङ्गदराट् हरिभक्तः पुरीमयोध्यां हिरण्मयीं वातः ॥ ९७ ॥

**रामपक्षे**—तत्रैकः पवमानजनो हनूमान् वायुपुत्रः हिरण्मयीमयोध्यां पुरीं लङ्कां प्राप्तः । तु सावधारण्यः । कथंभूतः । प्राप्तसुवर्णमुद्रिकः । अङ्गराट्सहितः । हरेर्भक्तः योद्धुमशक्याम् । अनेनैव (एन विष्णुनैव) योध्यामिति वा । भक्तत्वादेव तत्र गत इति ध्वनयन्नाह ॥ अथ **नलपक्षे**—तत्रैकः पर्णादो नाम विप्रः सुवर्णमुद्रां गृहीत्वा तामयोध्यां प्राप्तः । 'ब्राह्मणा जङ्गमं तीर्थम्' इत्यादिवाक्याज्जाताः पावकाः पवमानाः । ताच्छील्ये चानश् । पूङ्यजोः शानच् वा । पवमानश्चासौ जनश्चायात् । किं कृत्वा । शोभना भैम्युक्ता वर्णास्त एव मुद्रिका यत्र सः । साङ्गं ददातीति साङ्गदस्तादृशो राट् राजा यस्य सः । 'हेमशृङ्गी शफै रौप्यैः' इत्यादि साङ्गगोदानं यथा तथा सर्वाणि दानानि यस्य भीमस्याभूवन् । पुनः कथंभूतः । हरिभक्तः । कथंभूतामयोध्याम् । हिरण्मयीम् । दाण्डिनायनसूत्रे निपातितो हिरण्मयशब्दः । उद्गीतिवृत्तम् ॥

आहतिमिङ्गिलजुष्टां नदीशवेलां विलोक्य पुनः ।
संपातिवाक्यमहनः संतीर्य कराशिमेतस्ताम् ॥ ९८ ॥

**रामपक्षे**—पुनः संपातिवाक्यमहनो हनूमान् कराशिं संतीर्य तां पुरीमेतः । किं कृत्वा । आहतिमिङ्गिलजुष्टां नदीशवेलां विलोक्य । तत्पर्वतगुहास्थजटायुरनुजसंपातिवाक्यस्य महनं पूजनं यस्य सः । गृध्रत्वादित एवाहम् अशोकवनिकास्थसीतां पश्यामि तत्रैवास्ति सेति ॥ अथ **नलपक्षे**—संपातिवाक्यमहनः आहतिमिङ्गिलजुष्टां नदीशवेलां पुनर्विलोक्य कराशिं संतीर्य तामेतः । आहतिमिङ्गिलाकारा मण्डलेश्वराः कुण्डिनायोध्यान्तरालवर्तिराजाः तैर्जुष्टां प्रीणितां नदीशवेलामिव दमयन्तीं विलोक्य पुनः कराशिं नानानदीनदजलपूरां दृष्ट्वोत्तीर्य पवमानजनोऽन्यः कश्चिद्द्विजस्तामयोध्यामेत आगतोऽभूत् । संपातिनः शीघ्रोड्डयनपक्षिण इव दूता ये प्राहीयन्त तद्वाक्यमहनः सत्यवशा इमे इति कृततद्वाक्यपूजनोऽयोध्यामेतः आगमत् । इदं साङ्गरूपकम् ॥

प्राप्तसुवर्णसुमुद्रः पुण्ययशःप्राप्तसांकेत्यः ।
उषितपुरीको मतिमान्नरदेवमवारुणत्तूर्णम् ॥ ९९ ॥

**राम(नल)पक्षे**—प्राप्ता सुवर्णा इव सुमुद्राः शोभनमुद्रा येन सः । 'मुद्राङ्गुलीयके चिह्ने मुद्रा प्रत्ययदायिनी' इति रभसः । पुण्ययशःप्राप्तसांकेत्यः पुण्ययशा बाहुकस्तस्मात् प्राप्तं सांकेत्यं क्रियाकारः मा स्म तप्यथा मामजह्वात्स इति कलेर्नियोगात्त्वज्जातनस्मस्मानन्तरं विधिर्वर्धयिष्यति एवं सायं पुनर्भाषणेन नल एवायमिति तं प्रधार्य उषिता

पुरी अयोध्या येन स मतिमांस्तूर्णं नरदेवं राजानं भीमाख्यं तूर्णमेवारुणत् प्रापत् । 'अवरोधस्तिरोधाने' इत्यादिकोशस्तु प्रागुपन्यस्तः ॥ अथ प्राप्तेत्यादि **रामचन्द्रपक्षे** व्याख्यानम्—सुवर्णचूडामणिं प्रत्ययदायकं प्राप्य पुण्ययशसा हेतुभूतेन सांकेत्समुपलभ्य । 'उष दाहे' । दग्धाशेषलङ्को बुद्धिमान्नरदेवं रामं हनूमान् पवमानजन इति प्रकरणादनुवर्तते । प्रापत् । उपगीतिः ॥

भीमपुरीमृतुराजः स्वयंवरार्थं गतः समाहूतः ।
हरिचङ्कुरभाक् मतिमान्सलक्ष्मणो बाहुकाग्रसरः ॥ १०० ॥

**रामपक्षे**—माहूतः स ऋतुराजः स्वयंवरार्थं भीमपुरीं गतः । कथंभूतः । हरिचङ्कुरभाक् । पुनः कथंभूतः । मतिमान् । पुनः कथंभूतः । सलक्ष्मणः । पुनः कथंभूतः । बाहुकाग्रसरः । 'ऋतूनां कुसुमाकरः' इति गीतासु । साक्षाद्वसन्त इव रूपकम् । मया सीतया लक्ष्म्या आहूतः शीघ्रमागच्छेति हनूमद्रथभाक् । 'चङ्कुरः स्यन्दने तृप्तौ' इति हैमः । 'चङ्कुरो रथः' इति कृदन्ते दीक्षिताः । बाहव एव का मायप्राया येषां ते बाहुका वानरा अग्रेसरा यस्य सः । बाहू निजौ काविव कृतान्ताविव यस्येति स्वबाहुदण्डबलीति भावः । 'शमने सर्वनाम्नि कः' इति विश्वः । भीमपुरीं रावणपुरीम् ॥ अथ **नलपक्षे**—भीमेनेति शेषः । स्वयंवरं करोमि भैम्या इति समाहूत ऋतुराजः नामग्रहणे पूर्वोक्तभाष्यान्नामैकदेशग्रहणम् । नञ् (टच्) समासान्तः । ऋतुपर्णो राजा स्वयंवरार्थं भीमपुरीं कुण्डिनं गतः । कथंभूतः । अश्वयुक् रथारूढः मतिमान् लक्ष्मणः श्रीमान् सः । पुनः कथंभूतः । बाहुक एवाग्रसरो यस्य सः । उपगीतिः ॥

उत्तमचरितो गच्छन्पथि राजा बाहुकाक्षिकक्कृत् ।
परिगणिताक्षावयवोवरुद्धहरिहृत्कुतूहली नृपतः ॥ १०१ ॥

**रामपक्षे**—उत्तमचरितः पथि बाहुकाक्षिकक्कृत् परिगणिताक्षावयवः गच्छन् अवरुद्धहरिहृत् राजा नृपतिः कुतूहली आसीत् । अस्तिर्भवन्तीपरः इति । बाहुकाः कपय एव आक्षिका व्यवहारद्रष्टारोऽध्यक्षास्तत्कर्ता चमूपतित्वदौवारिकत्वप्रेष्यत्वादिति युक्ताः कृताः परिगणिताक्षावयवः अष्टादशभेदो व्यवहारवृक्षो मन्वाद्युक्तो मिताक्षरायाम् । ते सर्वे येन विचारिता भगवता प्राप्तसुग्रीवहार्दाभिप्रायः रामकार्यं मया कर्तव्यमेवेति नून् पायन्ति शोषयन्तीति नृपा राक्षसाः । 'पै ओ वै शोषणे' । तांस्तस्यतीति । 'तसु उपक्षये' दिवादिः । नृपतः पदजित् गर्जन्तं सागरं दृष्ट्वा गगनाकारं दृष्ट्वा कुतूहली रामोऽभूदित्यर्थः ॥ अथ **नलपक्षे**—पथि गच्छन्नुत्तरीयदूरगमे परिगणितविभीतकपत्रफलः विद्याविनिमयप्रतिज्ञया बाहुकस्याक्षहृदयज्ञत्वकृत् । अक्षोऽत्र विभीतकः स्वयं बाहुकात्प्राप्ताश्वहृदयः उत्तमचरितः पुण्यश्लोकर्तुपर्ण आसीत् कुतूहली इति तात्पर्यम् । 'अस्तिर्भवन्तीपरः' इति महाभाष्ये प्रागेव कथितोपपत्तिः । उद्गीतिः ॥

कृतसेतुर्हरियानस्तीर्णनदीशो विभीषणाश्रयणः ।
भीमपुरीमृतुराजोऽवारौत्सील्लक्ष्मणाग्रसरः ॥ १०२ ॥

**रामपक्षे**—बद्धसेतुः । भ्रुकुटिवशात् इति शेषः । हरियानो हनूमद्यानः तीर्णसमुद्रः । आदिकर्मणि निष्ठा । तरीतुमारुच(रब्धः) विभीषणेन आश्रयणं दुरात्मरावणपरिहरणेन यस्य स इति बहुव्रीहिः । समुद्रतीरप्राप्तेन लक्ष्मणोऽग्रचक्षुर्यस्य सेनाग्रसर ऋतुराजः इव सौन्दर्येण रामो भीमपुरीं रक्षःपुरीं भयंकरीमवारौत्सीत् । अवरुधेर्लुङ् । समन्ताद्रुरोध ॥ अथ **नलपक्षे**—योषिद्रूपं महान्तमपि धर्मतो भ्रंशयतीति ध्वनयन्नेवाह—कृतसेतुः द्वितीयः पतिर्न भवतीति जानन्नपि ऋतुपर्णः कृतसेतुः । 'कृञ् हिंसायाम्' । स्वादिः छिन्नधर्मसेतुः । अश्वरथगविभीषणैः शान्तैराश्रयणं यस्य सः । तीर्णा नदीशा महानद्यः पथि येन सः लक्ष्मणः पद्मादिरेखायुक्तः । बाहुकोऽग्रसरो यस्य सः भीमपुरीं सायं त्वरया अवारौत्सीत् प्राप । कोशः रुधेः प्राप्त्यर्थे प्रागेव दर्शितः । आर्यावृत्तम् ॥

हीनां स्वयंवरेण न्यशीशमत्तां पुरीं मतिमान् ।
भीमप्रत्युद्गमनोऽभ्यागममात्रस्फुरद्धिषणः ॥ १०३ ॥

**रामपक्षे**—मतिमान् रामः तां पुरीं लङ्कां न्यशीशमत् । लुङ् । ददर्श । निपूर्वः शमिर्दर्शने । प्रेरणांशत्यागहेतुमण्ण्यन्तस्य रूपमिदम् । उक्तं च हरिणा—'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते' 'उबुन्दिर् निशामने' इति धातुपाठे ज्ञापकाद्दर्शनार्थः । कथंभूतो रामः । भीमैः राक्षसैः प्रत्युद्गमनं यस्य सः इत्युत्प्रेक्षा व्यङ्ग्या ध्वनिनिरूपणे काव्यप्रकाशे चतुर्थोल्लासे बुधैरवसीयताम् । पुनः कथंभूतः । अभ्यागममात्रस्फुरद्धिषणः संग्राममात्रप्रकाशमानबुद्धिः । कदा हत्वा मृधे दयितामिमं दुष्टं लप्से इति । एतावन्मात्रावधृतशेमुषीकः । 'स्त्रियाः पुंवत्–' इति पुंवद्भावः । 'गोस्त्रियोः–' इति प्रान्तस्य ह्रस्वः । कथंभूतां पुरीम् । परेण हीनाम् । 'देवाद्वृते वरः श्रेष्ठे' इति कोशः । 'वरो जामातरि प्रोक्तः' इति हेमचन्द्रः । लङ्काशब्दस्य स्त्रीत्वम् । समासोक्तिरलंकारः । मन्ये तादृशी लङ्का हिरण्मयी स्वानुरूपवरेण हीनाभूत् ॥ अथ **नलपक्षे**—मतिमानृतुपर्णस्तां पुरीमशीशमत् । कथंभूताम् । स्वयंवरेण हीनाम् । स्वयंवरचर्चापि यत्र नाभूत् कथंभूतो राजा । भीमेन राज्ञा ऋतुपर्णः समागम इति कृतप्रत्युद्गमः तस्याभ्यागमेनैवाहं वञ्चितोऽस्मीति धिषणा प्रादुर्भूता । उपगीतिः ॥

भैम्यालिः केशिनिका कारिणिकी वीरसेनसुतम् ।
अभ्याजगाम विनयाज्जलवह्निनिमीलनासक्ता ॥ १०४ ॥

**रामपक्षे**—विनयात् भैमी आलिः वीरसेनसुतमभ्याजगाम । विगतो नयो विनयः प्रादिसमासः । विनयमयते इति विनयात् विनय औद्धत्यम् । उद्धतेत्यर्थः । भीमस्य भ-

---

१. 'कदा हत्वा मृधे दुष्टमिमं दयितां लप्स्ये' इति योजना कार्या.

यंकरस्य रावणस्येयम् । 'तस्येदम्' इत्यण् । 'टिड्ढा–' इति ङीप् । कौणपी आलिः पङ्क्तिः । 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः' इत्यनुशासनम् । वीरा विक्रमशालिनी आर्क्षी सेना यस्य स वीरसेनो रामः स चासौ सुतश्चेति कर्मधारयः । 'सुतः पार्थिवपुत्रयोः' इत्यमरः । रामं राजानमभ्याजगाम । योद्धुमागमत् । कथंभूता भैम्यालिः । केशिनिका । अतिशायने मत्वर्थीयो महाभाष्यवचनात् भूमनिन्देत्यादि बोध्यम् । लम्बाः केशा अस्याः सन्तीति । अवक्षेपणे कन् । रूक्षपिङ्गललम्बकेशा । कारणिकी । 'परीक्षकः कारणिकः' इति तृतीयकाण्डे । कथं विक्रमो मनुष्यादिरयमिति परीक्षमाणा युद्धे । पुनः कथंभूता । जलं वारुणास्त्रं भ्रातृभ्यां प्रहितं युधि वह्निराग्नेयं तन्निमीलनं व्युपदशनं प्रत्यस्त्रैस्तत्रासक्तेति फलितोऽर्थः ॥ अथ **नलपक्षे**—भीमेन राज्ञा प्रागेव कुत्रचिदुपकार्यापार्श्वे बाहुकायावस्थानं दत्तं परीक्षार्थं कोऽपि न पश्येद्गतागतमिहेति । तत्र दमयन्तीप्रेरिता केशिनीसखी बाल्यादारभ्य हितैषिणी । अनुकम्पायां कन् बोध्यः । सखी विचक्षणा कारणिकी परीक्षिका विनयात् विनयवत्त्वेन वीरसेनसुतं नलमभ्याजगाम संमुखमायात् । कथंभूता । जलवह्निनिमीलनासक्ता । केनचिदत्रास्मै पचिक्रियायै जलवह्नी नैव देयौ । यदि नलोऽभविष्यत्तर्हि देववरसामर्थ्याद्वयमत्रोपास्थापयिष्यन्न चेन्नेति दमयन्तीनीत्या सा तथाकार्षीत् प्रत्यहमेवेति गूढोऽभिप्रायः । उपगीतिः ॥

द्विनिमीलनापि शक्त्या नलेन निर्वर्णितोद्गमद्वितया ।
कृतसंवादा बहुधा प्रतियाता सा पतिं तूर्णम् ॥ १०५ ॥

**रामपक्षे**—सा भैम्यालिः तूर्णं रावणं पतिं प्रतियाता परावृत्य गता । कथंभूता । रक्षःशक्त्या द्विनिमीलनापि अनलेन ज्वलद्वह्नितुल्यरामेण निर्वर्णितो दर्शित उद्गमः प्रकाशो द्वितयस्य जलवह्न्यस्त्रद्वयस्य यस्यै सेति व्यधिकरणपदो बहुव्रीहिः । 'सप्तमी विशेषणे' इति सूत्रे ज्ञापितत्वात् बहुधा कृतसंवादा अनेकप्रकारैस्तिष्ठ तिष्ठेति कटुवाक्यै रामेण सह कृतसंवादापि रोरूयमाणा हतविध्वस्ता तमेव रावणं शरणं गतेति व्यज्यते । तूर्णं प्रतियातेति पदव्यतिकरो व्यञ्जकः ॥ अथ **नलपक्षे**—द्विवारितद्वितयापि नलेन देवशक्त्या दर्शितद्वया दारकद्वयदर्शनादिना बहुधा कृतसंवादापि सुपरीक्षया निश्चिता(त)नलागमा दमयन्तीं स्वामिनीं शीघ्रं प्रत्ययासीत् ॥

मन्दोदरी तु भीमं जगाद नृपतीन्द्र कालरूपत्वात् ।
चर्करीति सांशयिक्यं केवलमिह वीरसेनसुतः ॥ १०६ ॥

**रामपक्षे**—तु पुनरेवं सति मन्दोदरी जगाद । किमिति । भीमं भयंकरस्वरूपं रावणं नृणां पतिर्नाशो येभ्यस्तेषामिन्द्र हे राक्षसेन्द्र सर्वराजबाधकत्वाद्वा । पतेरौणादिक इन् । वीरा सेना यस्य सः वीरसेनसुतः । 'सुतः पार्थिवपुत्रयोः' इति कोशः । कालरूपत्वात्कालवत् श्यामरूपत्वात् मम केवलं निश्चितमिह लङ्कायां युद्धे सर्वराक्षसकुलं घातयिष्यतीति सांशयिक्यं परमसंशयम् । अतिशयेन करोति ॥ **नलपक्षे**—तु पुनः मन्दोदरी भीमं

राजानमिह केवलं कालरूपत्वात्कृष्णवर्णत्वात् वीरसेनसुतो राजा मम संशयं चर्कर्ति । कृञो घञ् (यङ्) लुगन्ताल्लुट् । अन्येभ्योऽपि श्रुतत्वात्स एव । मन्दः कृशः उदरदेशो यस्याः सा । 'मूढाल्पापटुनिर्भाग्या मन्दाः स्युर्द्वौ तु शारदौ' इति कोशोक्तत्वात् । कृशोदरी दमयन्तीत्यर्थः । आर्यावृत्तम् ॥

इत्युक्तः कृतहूतिं स नतसुतं तं निरैक्षिष्ट ।
आत्मजयाततहर्षः स्वाहेयहतेः स्वरूपसंपत्तिम् ॥ १०७ ॥

**रामपक्षे**—मन्दोदर्या यदेत्थमुक्तस्तदा पुत्रमिन्द्रजितमाजुहाव रामजयाय । इत्युक्तः स कृताहूतिराह्वानं यस्य तं प्रसिद्धं त्रिलोक्यां पादयोः प्रणतं सुतं मेघनादं निरैक्षिष्ट । कथंभूतं तम् । स्वाहेयधृतेः ब्रह्मास्त्रसर्पास्त्रादिधारणात् अवश्यं जेष्यामि राममिति आत्मजये आततो हर्षो यस्य तम् । 'दृतिकुक्षिकलशिवस्त्यहेर्ढञ्' । आहेयमिति शैषिकेष्वर्थेषु । स्वरूपसंपत्तिः स्वरूपं स्वभावः । 'स्वरूपं च स्वभावश्च' इति कोशात् । स्वभावादेव संपत्तिर्यस्य स तम् ॥ अथ **नलपक्षे**—दमयन्त्येत्युक्तः स भीमो नाम बाहुकव्याजं नलमाह्वयत् । कृतहूतिं कृताहूतिर्यस्य तम् । 'हूतिराकारणाह्वानं' इति वचनम् । प्रणतसुतं चरणपतितनलं निरैक्षिष्ट । आत्मजया दमयन्त्या ततो हर्षो यस्य तम् । सुष्ठु अहिदत्तवस्त्रधृतेर्धारणमात्राच्छिन्नसंदेहस्वरूपसंपत्तिं कन्दर्पतुल्यपूर्वस्वरूपसंपत्तिमत एव सर्वेऽप्यानन्दस्वरूपा जाता इत्यर्थः । अहिः कर्कोटकः प्रागुक्त एव । 'सुतः पार्थिवपुत्रयोः' । उद्गीतिः ॥

रामाभ्यागम एव द्राग्रावणराण्महामोहः ।
अतिकायाकम्पनयुग्देवान्तनरान्तयुक्सकुलः ।
सह कुम्भकर्णमेघो वज्रखगैरस्तमायिष्ट ॥ १०८ ॥

**रामपक्षे**—रामाभ्यागमे सत्येव द्राक् रावणराट् अस्तमायिष्ट अस्तंगतः । 'संग्रामाभ्यागमाहवाः'। कथंभूतो रावणराट् । महामोहः अतितमसा महामोहो यस्य सः । अतिकायः सेनापतिः अकम्पनदेवान्तकनरान्तकादयः कुम्भकर्णमेघनादौ च । कुलेन सह गणयितुमशक्यत्वात् । वज्रतुल्यखगैः रामस्य लक्ष्मणस्य जेघ्रीयमाणाः पृथिव्यां शिश्यिरे । रामयोरभ्यागम एवेति समासे द्वयोरभेदाल्लक्ष्मणोहः कर्तव्यः । सरूपत्वादेकशेषः ॥ अथ **नलपक्षे**—रामस्य नलस्य संगमे सत्येव कल्पावेशाद्रावणराडिव महामोहः षड्गर्गेषडूर्म्यादिगणसहितो निगीर्याध्यवसानरूपातिशयोक्त्या तेषां सर्वेषां कविना कौणपरूपत्वं दर्शितम् । शीघ्रमेवानश्यदित्यर्थः । षट्पदीगाथावृत्तम् ॥

वियतः कौसुममपतत्पुण्यचरित्रस्य मूर्ध्नि तदा (वर्षम्) ।
अपणायन्विबुधास्तं क्षौणीशी नीतितो हृष्यत् ॥ १०९ ॥

**रामपक्षे**—पुण्यचरित्रस्य रामस्य शिरसि वियत आकाशात् कौसुमम् । 'तस्य समूहः' इत्यण् । पुष्पवर्षमपतत् तदैवागत्य इन्द्रादयोऽपणायन् अस्तुवन् । 'पण स्तुतौ' । क्षौणी-

शस्येयमपत्यं स्त्री सीता नीत्या अग्निशुद्धात्मदेहकरणरूपनीत्याहृष्यत् अनन्दत् । लोकापवादपरिहारपूर्वकभर्तृसमागमात् ॥ एवमेव **नलपक्षे**—तत्रापि पुण्यश्लोकोपरि पुष्पवर्षमपतत् । कलिजये दयितासंगमे स्वरूपप्राप्तौ सत्यामिन्द्रादयोऽस्तुवन् यथोचितकारित्वात् क्षौणीशी दमयन्ती स्वकृतनीतिफलवत्तादर्शनादहृष्यत् ऋतुपर्णश्चकितो गृहागनगात् ॥

कर्णीरथगा साध्वी शुचिवर्णितवृत्तवैशिष्ट्या ।
आब्राह्मं भुवि गीता नृपदयिताजीहृषत्सभ्यान् ॥ ११० ॥

**रामपक्षे**—नृपदयिता सीता सभ्यानजीहृषत् । कथंभूता सा । कर्णीरथगा नार्युचितप्रवहणाख्ययानगा । पुनः कथंभूता । साध्वी पतिव्रता । शुचिनाग्निना वर्णितं वृत्तस्य चरित्रस्य वैशिष्ट्यं यस्याः सा । भुवि आब्राह्मं ब्रह्मलोकावधि तोष्टूय्यमाना । 'तत्र साधुः' इति सभाशब्दाद्यत् ॥ **नलपक्षे**—शुचिभिर्मेधातिथिसुमतिजाबालिनारथै(दै)र्वर्णितचरितप्राशस्त्या दमयन्ती प्राद्योतिष्ट । शेषं समानम् । उपगीतिः ॥

व्यावृत्ते ऋतुराजे यथागतं सत्सभाजनो विधिवत् ।
प्रासादवर्यसंश्रित्कलितगुरूद्वीक्षणोऽभासीत् ॥ १११ ॥

**रामपक्षे**—ऋतुराजे व्यावृत्ते सति विधिवत्सभाजनः प्रासादवर्यसंश्रित्कलितगुरूद्वीक्षणोऽभासीत् दाशरथिः प्रकरणाल्लभ्यते विशेष्यः । 'रा दाने' । ऋतूनामात्मशक्त्या लोके राति ददातीति ऋतुदः । 'आतोऽनुपसर्गे कः' । ऋतुदः स चासावजश्च ऋतुराजो विरञ्चिः । ऋतुषट्कं प्रतिवर्षं प्रकटीकरोति प्रत्यक्षं लोके दरीदृश्यताम् तस्मिन् राममभिष्टुत्य स्वधाम गते सति । 'सभाज प्रीतिसेवनयोः' । सतां सेवक इति पूजक इति सतां पूजकः लङ्कायामेव प्रासादवर्यसंश्रित् विधिवत् यथार्हं कलितगुरूद्वीक्षणः कृतदशरथदर्शनोऽभिवन्द्य । 'कलिधातुरनेकार्थः । कलितं कृतं गुरोरुद्वीक्षणं येन सः । 'भा दीप्तौ' लुङ् । यथा लोके पितृभक्तः कोऽपि नास्ति, तथा भक्तिस्फीतां विधाय पूर्णचन्द्र इव व्यचकासीत् । न चेदं नास्ति । "बह्वर्था अपि धातवो भवन्ति' इति भूवादिसूत्रं व्याचक्षाणो भाष्यकार आह ॥ अथ **नलपक्षे**—ऋतुपर्णे राज्ञि यथागतं स्वीयामयोध्यां प्रति गते सति विप्रादीनां यथार्हं कृतपूजो नलः श्वशुरब्रह्मर्षिप्रभृतीनां गुरुजनानां प्रीतिनिशामनव्यापारो यस्य स प्रासादश्रेष्ठे कौण्डिनमधिष्ठाय कंचिदिष्टं व्यद्योतिष्ट । आर्यावृत्तम् ॥

पुण्यजनेशेन ततः प्रातिष्ठेन प्रणीतवरिवस्यः ।
वैमानपुष्परथभाक्सलक्ष्मणो द्राग्गतः स्वपुरीम् ॥ ११२ ॥

**रामपक्षे**—ततः प्रातिष्ठेन प्रतिष्ठायामनुभावी प्रातिष्ठः । 'शेषे' इति सूत्रेणाण् । आदिवृद्धिः । 'शेषे' इति लक्षणं चाधिकारश्चेति सिद्धान्ते व्याख्यातम् । लङ्काराज्यप्रतिष्ठानुभावी विभीषणस्तेन रक्षोधिपतिना प्रणीतवरिवस्यः कृतपूजनशुश्रूषः वैमानपुष्परथ-

भाक् विमानानामीष्टे प्रभुर्भवति वैमानश्चासौ पुष्पघटितरथश्च । मध्यमपदलोपी समासः । वैमानपुष्परथं भजतीति भजो ण्विः । पुष्पकमध्यारुह्य लक्ष्मणयुक् द्राक् स्वपुरीमयोध्यां गन्तुमारेभे आदिकर्मणि निष्ठा गत इति ॥ अथ **नलपक्षे**—ततः पुण्यजनाः कुण्डिनभवास्तेषामीशेन प्रभुणा भीमेन मासमात्रं व्यतिवाह्य कृतपूजनो विमानानुकारिपुष्परथारूढः । 'असौ पुष्परथश्चित्रयानं न समराय यत्' इति कोशः । लक्ष्मीवान् स नलः स्वपुरीं निषधपुरीं द्राक् गतः । आर्यावृत्तम् ॥

तीर्थेशपौरसङ्गश्चतुरङ्गबलावराश्रितो नन्दी ।
अक्षहृदयी जिताक्षः सपुष्कराक्षः पदं प्राच्छैत् ॥ ११३ ॥

**रामपक्षे**—पुष्कराक्षः स रामः पदमयोध्यानगरं प्राच्छैत् प्राप । कथंभूतः । तीर्थेशे प्रयागे पौराणां सङ्गो यस्य सः । पुनः कथंभूतः । चतुरङ्गबलावराश्रितः हस्त्यश्वादिचतुरङ्गबलेन अवराभ्यां भरतशत्रुघ्नाभ्यां श्रितः सेवितः अवरजन्मत्वात् अनुजाभ्यामित्यर्थः । कथंभूतः । नन्दी अत एवाधिकहर्षः । अक्षेषु व्यवहारेषु हृदयं प्रशस्तं चित्तमस्यास्तीति अक्षहृदयी । प्रशंसायां मत्वर्थीय इनिः । 'अथाक्षमिन्द्रिये । ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे' इत्यनुशासनमामरम् । जिता अक्षाः पाशका येन । स्वप्नेऽपि द्यूतव्यसनं नाभूदिति भावः । एवं स कमलपत्राक्षः पदं प्राच्छैत् । 'पुष्करं पङ्कजे व्योम्नि' इति कोशः ॥ अथ **नलपक्षे**—'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । अवतारर्षिजुष्टाम्भः' इत्यमरः । उपाध्यायादिपौरजनसङ्गः चतुरङ्गबलाश्रितः श्वशुरदत्तत्वात् अवराः कृषीवलादयः तैश्च सह नन्दी प्रमोदभाक् अक्षहृदयी युध्यस्व द्यूतं वा कुरु सर्वज्ञोऽहमित्युक्तो हृष्टः । पुष्करोऽक्षक्रीडां पुनस्तेनाकार्षीत् । एतच्च स पुष्कराक्षपदेन व्यज्यते । काव्यप्रकाशे व्याख्यातम् । पुष्करेण आक्षं क्रीडनं सवर्णदीर्घे सति । पुष्करेण आक्षमक्षक्रीडनं यस्य स इति बहुव्रीहिः । जितं जयोऽक्षैर्यस्य स इति बहुव्रीहिः । पदं राज्यमपहृतं प्राच्छैत् प्राप । नैषध इत्यर्थः । स तु ह्रीणः सन् नलेन स्वग्रामं प्रेपितो निरक्रामत् । अनन्तरं दमयन्तीमाह्वास्त स्फीतपरिबर्हाम् ॥

आङ्गिरसाभैर्विप्रैरभिषिक्तो देववृन्दनुतः ।
अधिराजं करकर्षी क्षौणीशीसंयुतो व्यचकात् ॥ ११४ ॥

**रामपक्षे**—स इत्यनुवर्तते । वसिष्ठेन राज्याभिषेकसंभारे कल्पिते सति आङ्गिरसो बृहस्पतिः तत्तुल्यैरौर्वशेयादिभिर्महर्षिभिः सिंहासनोपविष्टो रामः ससीतः पुण्यतीर्थजलैः सर्वाधिदेवस्तूयमानः । अधिराजं राजभ्यः इति विभक्त्यर्थेऽव्ययीभावः । करान् कर्षति तच्छीलस्तदाचकात् अराजिष्ट । चकासेर्लङि रूपम् ॥ अथ **नलपक्षे**—निषधस्थब्राह्मणादिभिः सर्वैः संभूय माङ्गल्यसाधकाभिषेकसर्वविपत्कर्तनं विधिवत्समानैर्यथाविधि पुनरभिषिक्तो मृतागत इव पुण्यश्लोकत्वात्स्वस्थैः सुरैरपि दत्तमण्यादिसंभारः प्रीत्याधिराजकरानादाय दमयन्तीसंयुतो व्यचकात् विदिद्युते । उपगीतिः ॥

कामोऽयं कथमङ्गी वृत्रघ्नोऽयं कथं द्विनेत्र इति ।
ब्रध्नोऽयं न हि तीक्ष्णस्तदित्थमूहा व्यकल्पन्त ॥ ११५ ॥

**नलपक्षे**—यदि कन्दर्पः कथमङ्गी तस्यानङ्गत्वात्, यदि वृत्रघ्नः द्विनेत्रत्वं कथं सहस्राक्षत्वादिन्द्रस्य, यदि चण्डांशुस्तर्हि तीक्ष्णत्वं कथं न स्यात्, तदा ऊहास्तार्किका इत्थं व्यकल्पन्त विकल्पांश्चक्रुः । ससंदेहालंकारोऽयम् ॥ **नलपक्षेऽपि** समानार्थमिदम् । तुल्यसौन्दर्यत्वात् । आर्यावृत्तम् ॥

कपिकच्छूः शत्रूणां मित्राणामास पाठीरः ।
कल्पतरुर्दीनानां वनीपकानां स वीरसेनसुतः ॥ ११६ ॥

**रामपक्षे**—मालारूपकेणाह—शत्रूणां कपिकच्छूः कण्डूरावत् रामपक्षे प्राक् मित्राणां तु पाठीरो मलयज इव आस बभूवेत्यर्थे तिङ्प्रतिरूपकमव्ययं बोध्यम् । दीनानां याचकानां कल्पतरुरिव दानशौण्डत्वात् । कथंभूतो रामः । वीरसेनसुतः वीरा रणानिवर्तिनी सेना यस्य सः स चासौ सुतश्च । 'ग्रहभेदे ध्वजे केतुः पार्थिवे तनये सुतः' इत्यमरोक्तिः ॥ **नलपक्षेऽपि** इत्थंभूतोऽर्थो व्यवसातव्यः ॥

परस्परिताख्यं रूपकं काव्यप्रकाशे ।

लोकंपृणः प्रणयकृद्धरिवर्याणां गुणोच्चरणी ।
पवमानजनाश्लेषी विसृष्टहरिकोऽकरोद्राज्यम् ॥ ११७ ॥

**रामपक्षे**—स इत्यनुवर्तते । राज्यमकरोत् । कथंभूतः । [लोकं] पृणः । 'लोकस्य पृणे' इति सूत्रेण मुम् । 'पृण प्रीणने' तौदादिकः । इगुपधत्वात्कः । प्रणयकृत् । लोकान् प्रीणाति इति व्युत्पत्तिः । 'प्रणयास्त्वमी । विस्रम्भयाच्ञाप्रेमाणः' इति तृतीये । विश्वासकृत् हितेषु प्रेमकृत् प्रणयं करोतीत्युपपदसमासः । हरिवर्याः सुग्रीवादयः तेषां विसर्जनकाले मध्येसभं गुणवर्णनकृत् तेन तेषां प्रेमकारकत्वं जातम् । पुनः कथंभूतः । पवमानजनो हनूमान् तदालिङ्गनकारी । 'सुप्यजातौ–' इति णिनिः । विसृष्टाः स्वदेशं प्रति हरयः पूर्णकामा येन सः । 'शेषाद्विभाषा' इति कप् समासान्तः ॥ अथ **नलपक्षे**—हरिरेव वर्यो येषां ते हरिवर्याः परमवैष्णवास्तेषां गुणोच्चारणे प्रणयकृत् प्रेमकृत् पवमानजना विप्रास्तदाश्लेषी भक्त्या हरिं कायन्ति गणयन्ति । 'कै गै शब्दे' । हरिका वैष्णवाः विसृष्टं दानं हरिकेभ्यो यस्य सः । 'सृज विसर्गे' । नपुंसके भावे क्तः । विपूर्व उत्सर्जनविसर्जने । एतादृक् राज्यं नलोऽकरोत् ॥

घटदोहिन्यो गावः फलपूर्णा विदिद्युते वसुधा ।
व्यसनानि पुष्कसमपि त्यक्त्वारण्यं प्रयातानि ॥ ११८ ॥

**रामपक्षे**—रामे राज्यं शासति गावो घटपूरकदोहाः आसन्, वसुधा फलसंपूर्णा विदिद्युते इति भयं कुतः । व्यसनानि पानाक्षादीनि पुष्कसं चण्डालमपि त्यक्त्वा घोरं वनं

प्रयातानि । इदमद्भुतमासीदिति भावः । तस्मिन् पच्यमानजनाश्लेषिणि राजनि सति इति 'अर्थवशाद्विभक्तिपरिणामः' इति भाष्ये परिभाषा । अनुवर्तते पूर्वतः पदमिदम् ॥ इत्थमेव **नलपक्षे**ऽपि । अद्भुतो रसो व्यङ्ग्यः । उपगीतिः ॥

कलशोद्भवादयस्तं दिदृक्षवो द्राक्समायाताः ।
रावणविमर्दतोषाः सलक्ष्मणं प्राणुवन्स्तोत्रैः ॥ ११९ ॥

**रामपक्षे**—तं रामं दिदृक्षवः कलशोद्भवादय ऋषयः आयाता द्राक् शीघ्रं रामाया-गत्य कलशभूरगस्त्यः रावणचूर्णीकरणतोषाः सलक्ष्मणं भूभारहारकत्वात्स्तोत्रैः प्राणुवन् । 'णु स्तुतौ' लुङ् । आदादिकः । उपसर्गादिति णत्वम् । सलक्ष्मणमिति मेघनादस्याप्यज-य्यत्वं चित्रं लक्ष्मणेन कृतं हननमिति ध्वनयामासुः ॥ अथ **नलपक्षे**—अतिश-योक्त्या रावणो महामोहोऽध्यात्मविद्यया नलः(लेन) सोऽपि हतः पुण्यश्लोक[त्वात् । तस्य] दिदृक्षयागस्त्यादयः श्रीमज्जनसमेतं तं कृतयुगे तुष्टुवुरित्यर्थः । उपगीतिः ॥

शम्बूकहिंसयापि ब्राह्मणवरदायको राजा ।
पार्थिव्या गर्भरुचा जह्लादे संशयच्छेत्ता ॥ १२० ॥

**रामपक्षे**—'शम्बूकः शूद्रतापसे' इति मेदिनी । शूद्रतापसहिंसयापि मृतविप्रपुत्रवर-दायको रामोऽन्तरागत्य गर्भरुचा पार्थिव्या राजपुत्र्या सीतया आजह्लादे आननन्द । व्यवहारेषु संशयच्छेत्ता ॥ अथ **नलपक्षे**—'गर्भागारं वासगृहम्' इत्यमरोक्तिः । 'दृ-श्यन्ते च पदेषु पदैकदेशान् प्रयुञ्जानाः' इति महाभाष्यम् । गर्भे वासगृहे कोष्ठागारे-ऽपि दीपं विना रुक् कान्तिर्यस्याः सान्यत्र का कथा तादृशसौन्दर्यवती दमयन्ती राज्ञी तस्याभूदिति विशेषः । शेषं समानम् ॥

कव्यन्तगामिनीं तां पदान्तरस्थानसेवनां साध्वीम् ।
मुनिवरयोषा भेजुः समीपमागत्य लब्धार्थाः ॥ १२१ ॥

**रामपक्षे**—रावणगृहे चिरस्थितां तां वाल्मीकेरन्ते प्रयातां तां मुनिवरयोषा भेजुः सिषेविरे । पदान्तरस्थानसेवनां कथम् । 'पदं शब्दे च वाक्ये च' इति विश्वः । वाल्मीक्या-श्रमोऽयं मिथिलायां जनकस्थानमिति शब्दभेदमात्रभेदात् स्थानान्तरमिति प्रतीतेर्लोके भगवद्भक्तसाम्याज्जनकस्थानमिति पारीणत्यम् । साध्वीं पतिव्रतां लब्धार्थाः समीपमा-गत्यासन्निवताः(?) । 'अन्तः समीपे' इति प्राक्कोशे प्रोक्तम् । 'कविर्वाल्मीकिशुक्रयोः' इति च । उत्तरालंकारेण पुनर्लोकापवादभिया पुनर्लक्ष्मणेन त्याजिताभूदिति व्यज्यते तदाश्रमे ॥ अथ **नलपक्षे**—मुनिवरयोषा जातूकर्ण्यादिजोषास्तां साध्वीं दमयन्तीं भेजुः । कथंभूताम् । पण्डितपार्श्वगामिनीम् । तिथिनिर्णयादिसंशयच्छेदनाय जातु प्रासादान्तर-स्थानसेवनां नव्यगृहस्थान् विहाराय तत्र नले गते सति । कथंभूता योषाः । समीपमा-गत्य दौर्गत्यभाजो लब्धार्थाः व्रतादौ स्वर्णवर्षकरणात् ॥

सकुशलवार्तापतियुग्दमयन्ती पार्थिवी नित्यम् ।
प्राणेशानुध्याना कालं व्यत्यक्रमीद्भूयः ॥ १२२ ॥

**रामपक्षे**—तत्राश्रमे कुशलवनामकपुत्रद्वयसहिता दमं करोति दमयन्ती तथा कुर्वती दमयन्ती । नामधातुत्वात् 'न पादम्याङ्–' इति निषेधो न धातुपाठस्थस्यैव निषेधात् । कथंभूता । आर्ता दुःखिता अपतियुक् पतिहीना नित्यमनुध्यानमनुगृहे प्राणेशस्य अनु वीप्सया ध्यानं यस्याः सा भूयः स्फीतं कालं व्यतिक्रान्तवती । 'पृथिव्या ञाञौ ।' 'टिड्ढाणञ्–' इति ङीप् ॥ अथ **नलपक्षे**—कल्याणवार्तासहिता । 'कुशलं क्षेममस्त्रियाम् ।' पतियुक् दमयन्ती राज्ञी भूयः कालं बहुहायनीं व्यत्यक्रमीत् । कथंभूता प्राणेशस्य अनुग्रहो यस्याः सा । 'अनुध्यानमनुग्रहे' इत्युत्पलमालाकोशात् ॥

यज्ञेषु स्वार्चाकं सौशील्यादेरधीयन्तम् ।
प्रकलय्य भूरितोषा प्रियं विवेकावहं मेने ॥ १२३ ॥

**रामपक्षे**—भूरितोषा विवेकावहं प्रियं मेने । बहुतोषा सा सीता तत्राश्रमे विवेककारिणमावहति । करोतीत्यर्थः । 'कृतौ करोत्यावहति विदधात्यादधत्यपि' इति भट्टमल्लकोशः । प्रियं रामं मेने । किं कृत्वा । स्वस्या अर्चा प्रतिमा यस्य सः पत्नीं विना यज्ञाभावात् । 'प्रतिकृतिरर्चा पुंसि' इत्यमरः । पुनः कथंभूतम् । सौशील्यादेरधीयन्तम् । सौशील्यादिगुणयुतां सीताम् । परोक्षे स्मरन्तम् । 'अधीगर्थदयेशाम्' इति कर्मणि षष्ठी । प्रकलय्य श्रुत्वा । 'इक् स्मरणे' । नित्यमधिपूर्वः ॥ अथ **नलपक्षे**—'अर्च पूजायाम्' । 'गुरोश्च हलः' इत्यप्रत्ययः । स्वस्या एव पूजा यस्य स तम् । योषिदन्तरपरिग्रहाभावात् प्रकलय्य श्रुत्वा । कलिधातुरनेकार्थः । शेषं प्राग्वत् । उपगीतिः ॥

प्राचेतसार्तनेन प्राप्तपदा सा रसाश्रयणा ।
भद्रासनोपविष्टाहीशमहातद्यशोऽगासीत् ॥ १२४ ॥

**रामपक्षे**—सा सीता तद्यशः अगासीत् । 'गै शब्दे' लुङ् । प्राचेतसस्य वाल्मीकेः स्वनेन प्रागयोध्यायां रामसमीपागता आर्तनं दया । ऋतिः सौत्रः । 'अर्तनं च ऋतीया च' इत्यमरः । प्राप्तस्थाना पश्चाच्छपथान्तरं रसा सिंहासनारूढां पातलमनैषीत् पुत्रीत्वान्नागैः सहागता । यज्ञाधिष्ठाने इत्यर्थः । रसाया भुव आश्रयणमालम्बनं यस्याः सा तादृशी सीता पतिव्रता अहीशैर्मातृवन्महो यस्याः सा तक्षकवासुक्यादिभिः तत्रस्थापि तद्यश एवा(गा)सीत् । अद्भुतो रसः ॥ अथ **नलपक्षे**—सा दमयन्ती तद्यशो नलकीर्तिमेवागासीत् प्रकृष्टं चेतो येषां ते प्रचेतसो विप्राः पर्णादादयः प्रचेतसामिदं प्राचेतसमर्तनं कृपा तयैव प्राप्तराज्या प्राप्तपतिका रसानां शृङ्गारादीनामाश्रयणं यस्याः सा । 'श्रिञ् सेवायाम्' । राज्ञा सह सिंहासनोपविष्टा हि निश्चयेन ईशैर्लोकपालैर्महा पूजा यस्याः सा । पुण्यश्लोकत्वात् । 'मह पूजायाम्' । 'घञर्थे कविधानम्' । वेदशास्त्रपारीणत्वात्प्रचेतस्त्वं विप्राणामेव श्रीमद्भागवतेऽवधारितम् ॥

................................................................ ।

................................................................ ॥ १२५ ॥

**रामपक्षे**—नल एव नृसोमः तीर्थं गतः अग्निहोत्रसहितः नृषु सोम इव। 'उपमितम्' इति तत्पुरुषः। रामो विरक्तस्तीर्थं गोप्रतराख्यं सरस्वदन्तर्गतं गतः। कथम्। तत्तद्देषु कुशावत्यादिषु न्यस्तासु ताः कुशलवसहिता भ्रातृपुत्रा येन सः। विगतः शेषो यस्मात् दुर्वासःशापभीत्या त्यक्तत्वात् अमुष्मिन्नेव उत्कण्ठितमानसः। अमत इति सार्वविभक्तिकस्तसिः। सन्नान् शरणागतान् सीदतो लाति अनुगृह्णातीति सन्नलः। पुनः श्रुत्वागमनं हरीणां समूहेन हारेण पौरेण पौरसमूहेन च त्वां विना मरिष्याम इति प्रार्थितः समागतः शून्या अयोध्या आसीत्॥ अथ **नलपक्षे**—सानलः अग्निहोत्र एव नृसोमः हारेण पौरेण समागतः स नल आसीत्। हरेरयं भक्तो हारः। जात्यपेक्षयैकत्वम्। वैष्णवसमूहेन पौरेण पौरसमूहेन प्रेम्णा प्राक् समागतः संगतः संश्चासौ नलः पण्डितो नलः स्थितः पुनस्तीर्थं ब्रह्मद्रवं गतः। कथंभूतः। तत्तत्पदव्यस्तसुतः तेषु तेषु स्थानेषु स्वकृताः सुताः पार्थिवा न्यस्ता येन सः निषधपुर्यामिन्द्रसेनं स्वपुत्रं प्रत्यतिष्ठिपत् अमुतः अबोधा दूरतः विशेषे परे ब्रह्मणि सच्चिदानन्दरूपे उत्कण्ठितं मानसं यस्य सः। 'अदसस्तु विप्रकृष्टे' इति मनोरमायामुक्तत्वात्। अदसो दूरवाचित्वम्। सप्तम्यर्थे तसिः। 'तसेश्च' इति तसिलादेशः। विभक्तित्वं प्राग्देशीयत्वात्। त्रिष्टुप्जगत्योरुपजातिः॥

................................................................ ।

................................................................ ॥ १२६ ॥

**रामपक्षे**—कश्चन अवरजोऽपि त्रिदिवे जिगमिषुं रामं न जहौ। सरयूजलमवगाह्य परं पदं वैष्णवमध्यगात् प्राप। सदेहः जघन्यजोऽपि आयोध्यः सारथ्यं जलमवगाह्य परं पदं विमानस्थोऽगात्। श्रीरामकरुणया केवलं स रामो भुवि यशसा यशःशरीरेणैव शिशिषे कर्मकर्तरि लिट्। शिषेः अशिष्यत॥ अथ **नलपक्षे**—तन्नलपालनजन्यप्रेम्णा कश्चन वृषलोऽपि मनसा स्वर्गं जिगमिषुस्तं न जहौ। मनसेत्यध्याहार्यम्। स नलः प्रियया सह कं ब्रह्मद्रवमवगाह्य निरस्तसुखान्तरं ब्रह्मानन्दं प्रविश्य वैकुण्ठमगमत्। केवलं स नलो यशसा भुवि पर्यशिष्यत। अद्यापि यदुपाख्यानश्रवणात्संकीर्णैरपि मुच्यते इति भावः। द्रुतविलम्बितवृत्तम्। 'को ब्रह्मात्मानिलार्केषु शमने सर्वनाम्नि च। पावके च मयूरे च सुखशीर्षजलेषु कम्॥' इति विश्वः। शेषं प्राग्वत्। पर्यन्ते ग्रन्थकारः शब्दब्रह्मरूपभगवच्चरणारविन्दस्मरणरूपमङ्गलं व्यतानीत्। 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि सुखदानि भवन्ति' इति महाभाष्ये॥

इति श्रीहरिदत्तसूरिकृते महाकाव्ये राघवनैषधीये प्रथमः सर्गः।

---

१-२. आदर्शपुस्तके श्लोकद्वयं नोपलभ्यते.

द्वितीयः सर्गः ।

कुशेन्द्रसेनौ गुणतो वरिष्ठौ ज्येष्ठौ तदीयाङ्गभुवौ पुरस्थौ ।
श्रीरामचन्द्रस्य नलस्य वृत्तं विडम्बयन्तौ तु धरामशिष्टाम् ॥ १ ॥
क्रमेण पुष्पाकरमुख्यषट्कं विभूतिमत्प्रेक्ष्य समुज्जिहानम् ।
सि(शि)ञ्जानमञ्जीरवराङ्गनाभिर्विजह्रतुः स्वोपवनेषु नाथ्यवत् ॥ २ ॥

(वसन्तवर्णनम् ।)

भ्रमद्भ्रमरसंचया ऋतुपुरंदरं सेवितुं
मनोहरविकूजितैः पटहवाद्यमातेनिरे ।
पिका मधुरकूजितैरिव वितेनिरे नाकिनां
मनःप्रणयकारकं परमगानमुच्छ्वासिताः ॥ ३ ॥

नृप इव वसन्ते समागते भ्रमद्भ्रमरसमूहा विशिष्टकूजितैः सेवितुं पटहवाद्यं चक्रुरिव। उत्प्रेक्षालंकारो व्यङ्ग्यः । वस्तुनालंकारो व्यज्यते । यत्र वादिशब्दा न भवन्ति पिका अपि तं सेवितुं मधुरगानं चक्रिरे इव ॥

काचित्सखी मानवतीं प्रत्याह—

अये मतिमतां वरे प्रणयभङ्गमेतर्हि नो
कुरुष्व वशगं पतिं विरहदाहदग्धा यदि ।
कृतान्तनगरातिथिर्भवसि चातुरी कास्ति ते
जगाविव रुतच्छलाद्विहगराट् पिको माधवे ॥ ४ ॥

अये इति कोमलामन्त्रणेऽव्ययम् । माधवे वैशाखे रुतच्छलात् सखि त्वां शिक्षयति न रौति किमिति अनङ्गदाहव्यथाक्रान्तासि । प्रणयभङ्गेन यदि मरिष्यसि का चातुरी भवित्री। 'सर्वथात्मानं गोपयेत्' इति श्रुतिः । अत्राप्युत्प्रेक्षा ॥

मरन्दनिवहैर्भृतं कुसुमवृन्दमुद्भातव-
च्चलत्किसलयाङ्गुलिः परिननर्त वल्लीततिः ।
निशाकरकरास्ततो बहुलकाममादीपय-
न्नृणां विरहिणां मनोविलुठिता जडीकारकः ॥ ५ ॥

समासोक्तिरलंकारः । वल्लीततिरूपा या स्त्री चलत्किसलयाङ्गुलिः सा परिननर्तेव गणिकावत् मनोविलुठिता इति । 'लुठ प्रतीघाते' । मनसो विलुठितं प्रतीघातो यैस्ते इति बहुव्रीहिः । शेषं स्पष्टम् । पृथ्वीछन्दोऽत्र ॥

पलाशतां प्रियारहां पलाशशाखिनो ययुः ।
खरैर्नखैर्गृहत्यजामसूनिवासितुं क्षमाः ॥ ६ ॥

प्रिया रहन्ति त्यजन्तीति प्रियारहस्तेषां प्रियारहाम् । 'रह त्यागे' । भौवादिकः । पलाशशाखिनः कौणपतां विरहिणां ययुः । पलमश्नन्तीति व्युत्पत्त्या । पलं मांसम् । 'पलमामिषम्' इत्यमरः । पादादियमकः शब्दालंकारः । कया रीत्या । खरैर्नखैरिव किंशुकैर्गृहत्यजां यतोऽसूनिवासितुं यत्नमचीकरन् । 'क्षमं शक्ते हिते त्रिषु' इत्यमरः । प्रमाणिकावृत्तम् ॥

हिरण्मयातपत्रतां स कर्णिकार आगतः ।
वसन्तभूपतेः सुहृन्मुरान्तकाङ्गनाप्रियः ॥ ७ ॥

कर्णिकारस्य पीतवर्णत्वात् वसन्तराजसेवायै स्वर्णच्छत्रतां समागतः । मुरान्तकाङ्गनाः षोडशसहस्रमिता या भागवते वर्णितास्तासां प्रियः प्रागभूत् यत् कर्णिकारोऽपि तथा ऋतुराजं शिश्रिये प्राग्वत् ॥

सौगन्ध्यं स्थलकमलं बभार भूरि-
प्राचुर्याद्दिश इव दाक्षु(क्षु ?)तामकार्षीत् ।
क्षुद्रोऽपि क्षितिपतिभाग्यगन्धजोषी
स्वाक्रीडे हरिणदृशा तदा चुकूर्दे ॥ ८ ॥

स्थलकमलं पाटलापुष्पं सौरभ्यातिशयं दधानं वसन्ते दिशो दिङ्नार्याः समीपे स्वकीयदानशौण्डतामिवाकार्षीत् । समासोक्तिरलंकारो दिश इति स्त्रीलिङ्गत्वाच्छब्दस्य । परिमलो नावासीत् । किं तु विट इव दिग्योषिते सौरभ्यमदात् । क्षुद्रोऽपि मधौ स्वाक्रीडे स्वोद्याने राजार्हगन्धजोषी मृगदृशा सह चुकूर्दे चिक्रीडे । प्रहर्षिणीवृत्तमेषु ॥

चण्डांशोः खरकिरणैः प्रतप्यमानाः
शुष्यन्ति प्रकटितदौर्बलीकनद्यः ।
इत्थं हि स्वहृदि विचार्य जह्नुकन्या-
वर्वर्धीत्तदवधि हैमतोनिवार्च्छेत् ॥ ९ ॥

जह्नुकन्या हैमेन इत्थं नावर्वर्धीत् । वृधेर्यङ्लुङन्ताल्लुङि रूपम् । किंतु दुर्बलनद्यः शोषिता रवितापेन अहं तु वरीवृध्याम् तदा अत्युल्लासो मम भविष्यतीत्युत्प्रेक्षालंकारः ॥

आयाते मयि यदि जिघ्रसीर्जनोऽयं
क्षुद्रत्वं विचकत एव तर्हि लोके ।
नैश्यं मे मधुरिति सस्यभूरिसंप-
न्मेषार्के विलसति युक्तमेव गोपास् ॥ १० ॥

जिघ्रसीर्बुभुत्सि(क्षि)तो जनोऽयम्। ग्रसेः सन्नन्तात्क्विप्। मधुर्विचारयामास। हेमन्तशिशिरयोर्गोधूमाद्यभावात् क्षुधितो जनः यदि मय्यपि तथा तर्हीशत्वं मम गतम्। इत्थं मेषस्थे सूर्ये विलसति सति गोपां राज्ञामिदमेव युक्तम्। विचकते प्रकटीभवति प्रभोः क्षुद्रत्वं न युक्तमिति मधुर्व्यचीकरत्॥

उल्लासो न भवति जाड्यतो नृणां द्रा-
गुष्णत्वादपि परिदूयते नितान्तम्।
वासन्तं दिननिकरं किमेतदूरी-
साम्यात्कः प्रकटितनिर्वृतिं व्यधत्त॥ ११॥

नृणां जाड्यादुल्लासः प्रीतिर्न भवति उष्णत्वादपि द्राक् परिदूयते। एतद्वितर्की को ब्रह्मा प्रकटितानन्दः साम्यं दिवारात्र्योर्व्यधत्तेत्यर्थः। प्रकटितानन्दं साम्यं यतः॥

मानुष्यं विलसितमेव मय्युदीते
प्रादुःष्याद्यदि कथमातिशायनं मे।
मत्वेदं दहनविधानभूसुरत्व-
प्रास्पर्धिः स्वत इह संबभूव चैत्रः॥ १२॥

मय्युदीते उदिते सति। वीगतीत्यत्र इकारोऽपि धात्वन्तरं प्रश्लिष्यते। ततः क्त उत्पूर्व उदयवाची। 'गत्यर्थाः प्राय उत्पूर्वा उदयार्थाभिधायकाः' इति भट्टमल्लकोशः। यदि मानुषक्रियामात्रं मयि प्रकटे प्रादुःष्यात् स्फुरेत् तर्हि ममाधिक्यं कुतः। इदमाकलय्येव अग्निहोत्रारम्भव्रतबन्धनादिक्रियाधारभूतो मधुश्चैत्र आसीत्ततो व्यतिरिक्तत्वं जातममुष्य। प्रहर्षिणी वृत्तम्। अतिशायनस्य कारकमिति 'तस्येदम्' इत्यण्। स्वतः स्वयमेव संबभूवात्मशक्त्या न तु तपःप्रभावात्॥ इति वसन्तवर्णनम्॥

(ग्रीष्मवर्णनम्।)

नवमालिकानवमालिका व्यजनैर्मुहुः कृतवीजना।
तप आगते वरनायिकाजनि न स्मरातपतापिता॥ १३॥

नवमालिकापुष्पैर्नवमालिका यस्याः सा। व्यजनैर्मुहुर्वारंवारं कृतवीजना वरनायिका तपे ग्रीष्मे आगते सति स्मरातपतापिता कामाग्नितापिता नाजनि न बभूव अतिदाहवशाद्ग्रीष्मे स्त्रीणामनङ्गबाला हसति यत्॥

दर्शे दर्शितदैन्य एव कतिचित्कांश्चित्कलाः प्राप्तवा-
न्मत्तो मत्त इवायमिन्दुरधिकं जाड्याश्रयो हैमनः।
मत्तेजस्तपसि व्यनीनशदरं मत्त्वेति नूनं रवि-
र्ग्रीष्मे भीष्मकरैर्विशोषयति किं क्रोधाज्जगद्व्यायतः॥ १४॥

दर्शितदैन्य एव मत्तः कतिचित् कलाः प्राप्तवान् हैमनो हेमन्तप्रकाशो जाड्याश्रयो विधुरयं तपसि मत्तेजो व्यनीनशन्नाशयामास । लघुरविरिति मत्वा ग्रीष्मे क्रोधाज्जगति व्यायतो दीर्घ इव भीष्मैः करैर्विशोषयति नूनम् । उत्प्रेक्षालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥

(वर्षावर्णनम् ।)

अथ वर्षावर्णनमाह—

वार्षेण पङ्किलजलेन परौद्धतीका
नद्यो जनव्यतिकरव्यतिमज्जनोत्काः ।
आसन्नचित्रमिह तुच्छजनोऽपि राज-
संमानमीषदधिगम्य सतां निहन्ति ॥ १५ ॥

जनव्यतिकरव्यतिमज्जनोत्का वार्षेण पङ्किलजलेन परौद्धतीका नद्यः आसन् इह चित्रं न । तुच्छजनोऽपि ईषद्राजसंमानमधिगम्य सतां निहन्ति पीडयति । 'जासिनिप्रहण' इति कर्मणि षष्ठीविधानाद्द्वितीया न भवति । वसन्ततिलका वृत्तम् ॥

वारां सुपूरमपि कर्षकभूरिसौख्यं
निर्मुच्य नारसिषुरम्बुधरास्तदानीम् ।
यच्छन्नपि प्रचुरभूरि महाजनोऽपि(हि)
स्वं नैव वर्णयति सर्गनिसर्ग एषः ॥ १६ ॥

तदानीमम्बुधराः कर्षकभूरिसौख्यं वारां सुपूरं प्रवाहं निर्मुच्यापि नारसिषुः न जगर्जुः । 'रस शब्दे' । 'अतो हलादेः—' इति वृद्धिविकल्पः । यच्छन्नपि प्रचुरधनो राजादिः स्वं नैव वर्णयति एष सर्गनिसर्ग एव सृष्टिस्वभाव एव । 'स्वर्णेऽपि भूरिचन्द्रौ द्वौ' इत्यमरः । अतः प्रचुरभूरीति न पौनरुक्त्यम् । वसन्ततिलका वृत्तम् ॥

पुष्टास्ते कर्णधारा जलधरपटलीव्याप्तकाले मयूरा
नाढ्यं सौख्यातिशीत्या व्यदधत मधुरं चातकाश्चातकान्न(न) ।
गोत्रागोत्रा च गोत्रा बहुरसभरिता दीनदैन्यं व्यपोह-
त्पत्रैः पुष्पैः फलैश्च प्रकटितविभवा प्राप्तपालाशसंपत् ॥ १७ ॥

जलधरपटलीव्याप्तकाले कर्णधारा नाविकाः पुष्टा धनादिभिरासन् । तत्काले तरणनैरन्तर्येण गर्वाधिक्यादतिरिक्थलाभोऽनायासेन व्यज्यते । मयूराः सौख्यान्नाढ्यं व्यदधत चक्रुः । मधुरं यथा स्यात्तथा चातकाश्चातका जला[नां] याचका[नां] नाभूवन् । गोभिर्जलैस्त्राणकारिका गाः पालयन्ती तृणसंपत्त्या गोत्रा पृथ्वी रसबाहुल्यपूर्णा कृषीवलानां दैन्यं व्यपोहत् निरास्थात् । जीविकाबाहुल्यात् । भूरिपलाशयुक् फलपुष्पादिभाक् । पृथ्वीविशेषणानि । स्रग्धरावृत्तम् ॥

(शरद्वर्णनम् ।)

हिमोपमा वारिधरास्तु शारदा न स्तोकदानक्षमणा बभूवुः ।
वित्ते विनष्टे परमोऽपि मर्त्यो याच्ञामपारां बरिभर्ति लोके ॥ १८ ॥

हिमोपमा निर्जलाः शारदा अल्पदानसमर्था न बभूवुः । विनष्टे वित्ते यथा मर्त्योऽपि दानमास्तां(?)लोकेऽपरां याच्ञां बरिभर्ति तथा । त्रिष्टुब्जगत्योरुपजातिः ॥

(हेमन्तवर्णनम्।)

प्रचण्डहिमवर्षणात्कमलिनीरुचिं भ्रंशय-
न्फलव्यतिकरच्छदान्वरतरून्विचेलांश्चरन् ।
गतिं तनुभृतां हरन्प्रकटयन्नृणां निःस्वतां
हिमागम ऋतुर्गुणी हिमचलैर्नृभिः सस्मरे ॥ १९ ॥

फलव्यतिकरेण छदयन्ति जीवयन्ति सर्वानिति तानपि नग्नीकुर्वन् प्रचण्डहिमवर्षणात्कमलिनीरुचिं भ्रंशयन् वस्त्रहीनानां मार्गरोधं कुर्वन् निर्धनत्वं प्रकटयन् । हिमागमऋतुरित्यत्र समासेऽप्ययं प्रकृतिभाव इति हिमजलमात्रेण नृभिर्गुणवान् स्मृत इति । पृथ्वीछन्दः ॥

(शिशिरवर्णनम् ।)

अधरदशनरागो मारुतो वाति पूर्णं
वरयुवतिजनानामौपपत्यं दधानः ।
तपसि परतपांसि व्यञ्जयन्व(न्ध)र्मिन्नृणां
शिशिर इति स यत्र प्रोदगाद्भात्प्रियंगुः ॥ २० ॥

यत्र ऋतौ तूर्णं वरयुवतिजनानामधरखण्डगाढप्रेमा । 'रागोऽनुरागे मात्सर्ये' इति विश्वः । औपपत्यं जारकर्म दधान इव मारुतो बुद्धिपूर्वं वाति । कथंभूतः ऋतुः । व-(ध)र्मिन्नृणां तपसि माघे परतपांसि प्रातःस्नानगायत्रीजपदानहवनादीनि पुराणोक्तानि व्यञ्जयन् प्रकटीकुर्वन् । एको हिमाद्रौ तदा पल्लवितः प्रियंगुर्भवति वृक्षो नान्यः हिमशीर्णत्वात् इत्यवधायाह—भात्प्रियंगुरिति । 'भा दीप्तौ' शत्रन्तः । भात्प्रियंगुरेव यस्मिन् स शिशिर इति ऋतुः प्रोदगात् व्यजृम्भिष्ट । राजकुमारद्वये भुवं शासति वर्णनमकार्षीत् यतः कविर्ऋतुषट्कस्यातो भूतप्रयोगः । प्रोत्पूर्वादेतेर्लुङ् इत्यवसीयतां पण्डितैः । उक्तं हि भाष्ये तृतीयाध्याये—'इह हि तत्कालिकानां राज्ञां क्रियास्ति प्रत्ययेऽधिकरणम्' इति । तस्थुः पर्वताः, अवहन्नद्यः, इति उदाहरणानि प्रयुक्तानि भगवता । विस्तरभिया न बहूक्तमस्माभिः ॥ इति सर्वर्तुवर्णनम् ॥

गर्गर्षिवंशतिलको जयशंकराख्यो
ज्योतिर्विदां प्रणयकृत्सुकवीन्द्रमान्यः।
अध्यात्मिकावगतिशान्तिपरायणोऽभू-
द्धर्मोपदेशनपटुर्नयबोध आसीत्॥ २१॥

तत्सूनुर्हरदत्त इत्यमलधीः श्रीमत्फणीन्द्रोदिते
भाष्ये पाटवतः प्रथामधिगतश्छन्दश्चितीनां बुधः।
साहित्यार्णवमन्थनैक..................
..........................................॥ २२॥

गर्गर्षीत्यादिपद्यानि स्पष्टार्थानि। प्रासादनाः। 'अद अतिक्रमसिंहयोः'। प्रासंमदैव-यतिक्रमणमनादं यैस्ते इति प्रासादना इति प्रकर्षभ्रमणाः प्रकर्षेण भ्रमणं येषां भ्रमवित्ता-लाभार्थं दूरगता इति महाकाव्यम्। काव्यस्य शुभाचार्यस्य सुकाव्यं प्रशस्तकाव्यं तद्व-त्काव्यं स्तुत्यम्। 'कव्र वर्णने'। 'ऋहलोर्ण्यत्'। अत एव परममुत्कृष्ट इति भावः। समजीघटत् निरमासीत्। एतावद्गूढमत्र ज्ञेयम्॥

इति श्रीहरदत्तसूरिकृते महाकाव्ये राघवनैषधीये द्वितीयः सर्गः।

**समाप्तमिदं महाकाव्यम्।**

